श्रीः

श्रीकेदारभट्टविरचितः

# वृत्तरत्नाकरः ।



वृत्तरत्नाकरपञ्जिकाव्याख्यासहितः ।

आचार्यश्रीशीलस्कन्धमहास्थविरेण

संशोधितः ।

मूल्यं १ रूप्यकम् ।

Published by Tukaram Javaji and Printed by
Ramchandra Yesu Shedge, at the Nirnaya-sagar
Press, 23, Kolbhat Lane, BOMBAY.

# VṚITTARATNÂKARA

BY

## PANDIT KEDÂRABHATTA

**With its Commentary**

VṚITTARATNÂKARAPANÇIKÂ

BY

**Prof. SRÎ RÂMAÇANDRA KAVI BHÂRATI**

BAUDDHÂGAMAÇAKRAVARTI

OF

**Gauda in India.**

**EDITED AND COMPILED**

BY

**VERY REV. C. A. S'EELASKANDHA MAHÂ STHAVIRA**

*Author of "Saddharma-makaranda" "Bhakti-S'ataka Tikâ," "Anuruddha S'ataka Tikâ" etc.*

(Principal of "Saraswati Mandapa" Sailabimbârâm, Dodanduwa, Ceylon, and Member of "Committee on Oriental Studies" Colombo).

**SECOND EDITION**

PUBLISHED BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JÂVAJÎ DÂDÂJÎ'S "NIRNAYA-SAGAR" PRESS

Bombay:

1913.

*Price 1 Rupee.*

श्रीः

# वृत्तरत्नाकरः

विद्वच्छिरोमणिना श्रीमता केदारभट्टेन
विरचितः ।

गौड़देशीयेन
श्रीबौद्धागमचक्रवर्त्तिना
श्रीमता रामचन्द्रकविभारतिना विद्वद्वरेण विरचितया
**वृत्तरत्नाकरपञ्चिकाख्यया**
सविस्तरव्याख्यया समलङ्कृतः ।

---

लङ्कायाम्
दोडन्दुग्रामे शैलबिम्बारामविहारे सरस्वतीमण्डपमधिवसता
आचार्य्यश्रीशीलस्कन्धमहास्थविरवरेण
संशोधितः संस्कृतश्च ।
द्वितीयावृत्तिः ।

---

सचायं
मुम्बय्याम्
श्रीमता तुकारामजावजीमहाशयेन
निर्णयसागरमुद्रायन्त्रालयाध्यक्षेण मुद्रापितः प्रकाशितश्च ।

---

शाकः १८३५, सन १९१३.

---

मूल्यं १ रुप्यकं.

DEDICATED

(By Permission)

To

SIR ALFRED CROFT K. C. I. E.

Director of Public Instruction

BENGAL.

The Editor.

# PREFACE.

HE who first observed the rules relating to the noble art and science of making verses and framed them into a regular system, we are told in the Samscṛit literature, was one **Pingala Muni** of old, otherwise known as **Pingalanâga Pingalâçârya** or **Patanjali Rishi.** With the object of placing before the student a more practical and concise treatise on this important subject, one **Kedârabhatta** wrote his famous **Vṛittaratnâkara** on the basis of **Pingala Muni's** immortal work which as we see is more a scientific treatise, minute in detail and therefore too tedious a work for the beginner.

The fact of there having appeared so many Tîkâs written by literary men of great repute in India and elsewhere on this one and the same **Vṛittaratnâkara,** is an unerring proof of its merits as a highly useful work in the study of this important subject. Out of the several Tîkâs that may be enumerated I have seen only five and they are, *Vṛittaratnâkara Setu*, *Vṛittaratnâkara Vivṛitti* and three others named *Sinhala Vyâkhyâna, Abhinawa Tîkâ* and *Vṛittaratnākara Pançikâ,* respectively, and it is with this last named Tîkâ written by scholarly **Sri Râmçandra Kavi Bhârati** of Gauda in India, added to that I now offer **Vṛittaratnâkara** to the student in the shape of this book.

For a critical study of **Vṛittaratnâkara** it would no doubt be found that this Tîkâ is of greater utility than most other similar productions on the book. Unfortunately for the student it is very scarce even in its native land, the existing few manuscripts having been confined to a very few of the private libraries to which no ordinary mortals of the present day can have access. Most of the Samscṛit students of the present day in Ceylon are doubtless unaware of its existence, and that such is the present state of the manuscript that those who have ever

seen it never perhaps used it for the purpose it had been intended. A book once held so high a position in the literature of our country and invariably used by the generality of its Samscrit students some years back, has now almost lost its name and fame, and is to all appearance undergoing the same fate as those works of great classic note of which our country's literature has suffered irrecoverable loss. In the interest therefore, of the literature of our country and of the Samscṛit students in general I undertook the preparation of this literary relic for the press.

Standing for centuries together as a manuscript, this Tîkâ abounds with clerical mistakes, greater part being omissions and superfluous additions which are highly perplexing. When comparing with each other the four different manuscripts of the Tîkâ which I obtained with considerable difficulty from distant parts of the Island for the purpose, I found them very much differing in many important points and were it not for the careful references made to other standard works on the subject, I would never have been able to bring the book to its present state. For making the book full and more complete I have added to it many explanatory notes on such points as have been not sufficiently or at all explained or commented upon by the author.

Although it would be hardly necessary for me to give here a description of the Author's life, as I have already given a lengthy narration of it in the Samscṛit copy of the preface and also in my preface to **Bhakti S'ataka** that inimitable poem by this self same author, a few words added to this in regard to his parentage will not, I consider, be out of place.

Our author was a native of the village of Weerawati in Punjab in India and by faith a worshipper of Vishnu and a Brahmin by caste. His father was called **Ganapati** and was a learned Brahmin of the Kâtyâyana family. His mother called **Devi** belonged to the wellknown Bharadvaja family of the aforesaid caste. Our author had two brothers named **Halâ-**

**yudha** and **Angîrasa** who were also known for their attainments in the literature of their country. He came to Ceylon some 451 years ago when king **Sri Parâkramabâhu** was reigning in Jayawardhanapura, Cotta, and having had studied Buddhism under the illustrious **Sri Râhula S'angharâja Mahâ Sthavira,** became a convert to it. It was in veneration of the Founder of his new faith he composed **Bhakti S'ataka,** which he soon after dedicated to the king. The king so much admired the Author's abilities that he was invested with the honorary title of **Sri Bauddhâgamachakravarti** and appointed him as one of his counsellors. He lived the rest of his life in his adopted country as an orthodox Buddhist under the kind patronage of the king and his nobles and highly respected by the nation.

It has been said that he wrote this Tîkâ in 1999 of the Buddhist erá when he was in Ceylon and at the request of another Brahmin named **Subbrâhman.**

C. A. S.

*7th November 1907.*
*"Sailabimbarama",*
*Dodanduwa,* Ceylon.

# मुखबन्धः ।

इदं खलु छन्दःशास्त्रं पूर्वाचार्यैर्बहुभिर्विद्वद्भिर्वेदाङ्गत्वेनैव सङ्कल्पितम् । नापरैर्निरवच्छिन्नवैदिकछन्दोलक्षणनिरूपणाभावात् । परैस्तु शुद्धवैदिकच्छन्दोग्रन्थ एव वेदाङ्गतया परिगण्यते । सुविपुलमतिना ऋग्वेदभाष्यकृतापि छन्दोग्रन्थस्य वेदोपयोगित्वमेव तत्र दर्शितम् । वेदाङ्गान्यप्यत्र शिक्षा, कल्पः, व्याकरणम्, निरुक्तिः, छन्दः, ज्योतिषश्चेति षड्विधानि भवन्ति । तद्यथा-,

**"शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसाञ्चयः ।**
**ज्योतिषागमनञ्चैव वेदाङ्गानि षडेव तु" । इति ॥**

एवमुक्तेषु षट्स्वेवाङ्गेष्विदं शास्त्रमन्तर्भूतम् । षडेतानि कथं ? वेदाङ्गानि भवन्ति तद्यथा,—

**"छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ कथ्यते ।**
**ज्योतिषामयनं नेत्रं निरुक्तं श्रोत्रमुच्यते ॥**
**शिक्षा घ्राणन्तु वेदस्य मुखं व्याकरणं स्मृतम् ।**
**तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते" इति ॥**

ततस्तु तदध्ययनं तात्पर्यविधिबोधनायोपकारकं भवति । तद्विधिबोधनं हि पठनपाठनादिकौशल्यं जनयति । कौशल्यजननं दृष्टधार्मिकैः सांपरायिकैश्च सकलैरर्थनिवहैः सार्थीभावाय सुतरां प्रत्ययो भवति । ततो हि शिक्षाकल्पव्याकरणनिरुक्तीनामुद्ग्रहणानन्तरमेवैतच्छन्दःशास्त्रं सर्वैर्विद्यार्थिभिरेवावश्यमध्ययनं कर्तव्यम् । कोऽत्र छन्दसोऽस्यादिकर्ता ? इहैवेदमुच्यते ॥

पुरा किल पिङ्गलनामा एको मुनिर्देवासुरैः क्षीराम्बुधेरमृतमुद्धृतमिव वेदाम्बुधेश्छन्दोमृतमुद्धृत्य एतद्विशिष्टं शास्त्रं प्रणीतवानिति प्राच्यैरुक्तम् । तद्यथा—

**"क्षिराब्धेरमृतं यद्वदुद्धृतं देवदानवैः ।**
**छन्दोऽब्धेः पिङ्गलाचार्यच्छन्दोमृतं तथोद्धृतम्" इति ॥**

अयन्तु पिङ्गलमुनिः पिङ्गलनागः पिङ्गलाचार्यश्चेत्यपरनामद्वयेनापि लोके प्रतीतः । परन्त्विदं पतञ्जलमुनेर्नामान्तरमिति जनश्रुतिरपि वर्तते । अनेनैव पिङ्गलाचार्य्येणात्मनो विशिष्टविपुलविमलबुद्धिप्रभावात्परिविचिन्त्य वैदिकलौकिकयोश्छन्दसोः क्रमावबोधाय पूर्वं यानि यानि सूत्राणि विरचितानि तेषां दुर्बोधतया दुर्गमतयाऽतिविस्तरतया च तच्छास्त्रमभ्यसितुमीहमानानां बालानामनायासेनोद्ग्रहण-

धारणादिसौकर्य्यं मन्यमानेन केदारभट्ट इति नाम्ना केनचिद्विद्वत्प्रकाण्डेन पिङ्गलमुनिना कृतानुसारेणैव वृत्तरत्नाकरनामा स्वल्पोऽयं प्रशस्तग्रन्थो निरमायि । ततः पश्चात्तत्स्वार्थप्रकाशाय नानादेशीयैर्बहुभिर्विद्वद्भिर्नानाभाषाभिः कृताः टीकाटिप्पणीव्याख्यानादयोऽपि भूयो वर्तन्ते । तत्रैका वृत्तरत्नाकरसेतुनाम्नी टीका श्रीमता भास्करशर्मणा संस्कृतभाषया विरचिता । द्वितीया वृत्तरत्नाकरपञ्चिका नाम्नी टीका गौडदेशवास्तव्येन श्रीबौद्धागमचक्रवर्त्तीत्यपरनामधेयेन श्रीमता रामचन्द्रकविभारतिना संस्कृतभाषया विरचिता । तृतीया वृत्तरत्नाकरविवृत्तिनाम्नी संक्षिप्तटीका श्रीमता तारानाथतर्कवाचस्पतिभट्टाचार्य्येण संस्कृतभाषयैव विरचिता । चतुर्थी श्रीमता नारायणभट्टशर्मणा कृता नूतनसंक्षिप्तटीकापि दृश्यते । पुरा किल लङ्कायां केनचित् सैंहलीयेन विदुषा सिंहलभाषया कृता व्याख्यापि विद्यते । सा च कदा केन कृतेति ज्ञातुं न शक्यते । ताः पञ्चापि मया दृष्टाः । नान्यास्तावद्दृष्टाः । श्रुतमात्रा एव । तासां टीकानां सुविख्यातकीर्त्तिमता पण्डितप्रवरेण श्रीरामचन्द्रकविभारतिना विरचिता वृत्तरत्नाकरपञ्चिकानाम्नी टीका प्रशस्ता तत्वावबोधिनी सुगमा सविस्तरा सोदाहरणा च । सापि मया भूयो भूयोऽवलोकिता । साचैतर्ह्यस्मिन्देशेपि विरलतयैवाभिलभ्यते बहुभिर्विद्यार्थिभिः । तस्मादेतया टीकया समलङ्कृतस्य वृत्तरत्नाकरस्य प्रचारणे मम सङ्कल्पो वर्त्ततेस्म । अथापि तावत्तथाकर्तुं न शशाक ॥

संप्रति मुम्बाय्यां प्राचीनग्रन्थमालाप्रचारकस्य निर्णयसागरमुद्रायन्त्रालयाध्यक्षकस्य श्रीमतस्तुकारामजावजीमहाशयस्य साहाय्यं समुपलभ्य तत्प्रचारणाय कालः संप्राप्तः । ततस्तदर्थसाधनायेदानीं मयेदं प्रयत्नं क्रियते ॥

किन्त्वत्र प्रथमतोऽस्य ग्रन्थकर्तुर्देशकालनामादिसंदर्शनं ग्रन्थगौरवोत्पादनाय महोपकारं भवतीति मन्यमानास्तांस्तदुक्तैव क्रमेण दिङ्मात्रमिह संदर्शयामः । कथम्? अयं खलु श्रीरामचन्द्रकविभारतिः पुरा गौडदेशे ( पञ्जाबदेशे ) वीरवटिनामके अग्रहारे समुत्पन्नः कात्यायनगोत्रीयः । केशवचरणकमलपूजाभिरतश्चासीत् । अस्य जनको गणपतिर्नाम पण्डितद्विजवरः । माता च भारद्वाजगोत्रसंभवा देवीनाम्नी ब्राह्मणी । विख्यातगुणौ हलायुधः अङ्गीरसश्चेति द्वौ भ्रातरौ चाभवताम् । एषोऽपि कविभारतिर्नानाशास्त्रविशारदो निपुणधीः पण्डिताग्रगण्यः कविप्रवरश्चासीत् । तदुक्तं तेनैव—

**"तर्कव्याकरणश्रुतिस्मृतिमहाकाव्यागमालङ्कृति-**
**च्छन्दोज्योतिषनाटकार्थकथनाचार्य्यः सदग्रेसरः ।**
**आर्य्यः पण्डितवर्य्यनन्दनगुणस्त्यागी कवीन्द्रः क्षमी**
**श्रीबौद्धागमचक्रवर्त्तिधरणीदेवः समुज्जृम्भते" । इति ॥**

असौ पण्डितप्रवरः अस्मादेकपञ्चाशदुत्तरचतुःशतपरिमितसंवत्सरादुपर्य्येकस्मिन्नेव काले लङ्काद्वीपं समायातः । तदा लङ्कायां जयवर्द्धननाम्नी नगरे श्रीवीरपराक्रमबाहु-

नामा नृपतिर्बभूव। तस्य राज्ञः जनको धर्माशोकराजान्वये जातो जयमालनामा नृपतिः। माता कलिङ्गदेशराजान्वये संभवा सुनेत्रानाम्नी देवी। तद्यथा—,

**"धर्माशोकनृपान्वये जयमालो महीपतिः।**
**तस्य पुत्रः प्रजाश्रिये पराक्रमभुजोऽभवत्॥**
**कलिङ्गदेशसंजाता भूमिपालकुलोद्भवा।**
**सुनेत्रा नाम देवी सा पराक्रमभुजं प्रसूः"। इति॥**

स हि राजा पराक्रमबाहुर्धार्मिकः श्रुतकीर्तिः सुविज्ञातनीतिमार्गः कृतारातिविजयः सकलजनरञ्जकस्तेजोबलपराक्रमप्रतापालङ्कृतः संबुद्धशासनेऽतीव प्रसन्नः समस्तभूपालशिरोमणिः पण्डिताग्रणीश्चाऽभूत्। स नृपतिवरः समागतं तं पण्डितद्विजवरं दृष्ट्वा संजातप्रीतिसौमनस्यस्तस्मै यथोचितेन विधिना अतिथिसत्काराद्युपस्थानमकारयत्। स पुनर्विहितातिथिसत्कारः संस्तदनुरूपं निवासनदानादिकं महान्तं सत्कारसंमानादिकं च कारयामास॥

तस्मिंश्च समये लङ्कायां श्रीराहुलनामधेयो यतीन्द्रो बभूव। स गणी गणाचार्यश्च। स तु यतिपतिः मौर्यान्वये संजातः। राज्ञा पराक्रमबाहुना आबाल्यात्सुतप्रेमबुद्ध्या संवर्द्धितः। स च षोडशवर्षीयप्रदेशे स्थितः सन् कार्तिकेयवरप्रदानप्रसादाद्विपुलमतिर्विज्ञातशास्त्रसमयो विविधविद्यापारदर्शी चाभूत्। कोयं मौर्यवंशः?

पुरा किल सूर्यवंशादेव इक्ष्वाकुवंशो जातः। कालातिक्रमेण ततो भिन्न एव शाक्यवंशो जातः। तदनन्तरं चिरकालात्ययेनापि मौर्यवंशः समजनीति आख्यायिकादिषु प्रसिद्धः। तद्यथा— एकदा राज्ञः कोशलस्य पुत्रो विडूढभो* नामैकः कुमारः कपिलवस्तुनिवासिषु सर्वेषु शाक्यवंशसंभूतेषु राजराजकुमारेषु अतीव क्रुद्धः संस्तानघातयत्। तदा मरणभयचकितास्ते शाक्या भो वयं मौर्याः। नो शाक्या इति चोक्त्वा तस्मात्पलाय्य यथासुखं तत्र तत्र वासं कारयामासुः। तेषां केचिच्छाक्याः पाटलिपुत्रं केचित्कौशम्बं केचिद्वैशालिं केचित्साकेतं केचिद्वाराणसीं केचिच्छ्रावस्तींच समायाताः। ततः प्रभृति तेपि शाक्यास्तत्र तत्र प्राप्तप्राप्तेषु स्थानेषु मौर्यनाम्नैव प्रसिद्धा इति दृश्यन्ते। एकदा पाटलिपुत्रनगरेपि मौर्यवंशीयं चन्द्रगुप्तनामकं कुमारं राज्येऽभिषिक्तवान्। यथाह भागवते पुराणे—,

**"नवनन्दान् द्विजः कश्चित्प्रपन्नानुद्धरिष्यति।**
**तेषामभावे जगतीं मौर्या भोक्ष्यन्ति वै कलौ।**
**स एव चन्द्रगुप्तं वै द्विजो राज्येऽभिषेक्ष्यति"। इति॥**

अतः (२२१३) त्रयोदशाधिकद्विशतोत्तरद्विसहस्रपरिमितसंवत्सरादुपरि पाटलि-

---

*"विरूढको" इति क्वचित्।

पुत्रनगरेऽभिषिक्तेन राज्ञा धर्माशोकेन लङ्काद्वीपं प्रेरिता राजकुमारास्तेन राज्ञा समानगोत्रीया इति दृश्यन्ते । तेष्वपि बोधिगुप्तसुमित्रानामकयोर्द्वयोः राजकुमारयोर्बोधिगुप्तो नाम कुमारो लङ्कायां मौर्यवंशीयां सुनन्दां नाम कुमारीं पर्यणयच्च । ताभ्यां निवस्तजनपदोऽपि तावन्मौर्यजनपद इति नाम्नैव वर्तत इति पुरातनपुस्तकादिषु संदृश्यते । तत एव स राजा धर्माशोकोऽपि चन्द्रगुप्तकुमारोऽपि मौर्य्यवंशीयाविति केचिन्मन्यन्ते । यथाह महावंशे—

**(१) " ये सुभस्स बलत्थस्स भीता मोरियवंसजा ।**
**पलायित्वा नरावासं कप्पयिंसु तहिं तहिं ॥**
**तेसामञ्ञतमो नन्दीवापिगामे कुटुम्बिको ।**
**धातुसेनव्हयो आसी दाठानामो च तं सुतो ॥**
**पण्डुलब्राह्मणो नाम भोगवा बेदपारगो ।**
**दक्खिणस्मिं दिसाभागे वसी पण्डुलगामके ॥**
**कुमारो तत्थ गन्त्वाथ पस्सी पण्डुलब्राह्मणं ।**
**त्वं पण्डुकाभयो तात इति पुच्छिय व्याकतो" ॥ ( इति शुद्धमागधी )**

इत्थं किल भारतवर्षे च लङ्कायां च अयं मौर्यवंशस्तदा भूयिष्ठं प्रतीत आसीत् । ततोऽविच्छिन्नपारम्पर्य्यादेवाऽस्य श्रीराहुलयतिप्रवरस्यापि मौर्यान्वयसम्भवोऽभवदिति ज्ञातव्यम् । तथाप्यत्र तु तस्य विस्तरकथने अतिप्रपञ्चो भवति । तस्माद्वयमत्र तन्न विस्तारयामः । सोऽयं श्रीराहुलनामा यतिप्रवरोऽपि साम्बुद्धे वचने अतीव प्रसन्नः सन् प्राव्रजीत् । स चाचिरादेव त्रिपिटकेषु बुद्धवचनेषु नानाभाषासु नानासमयान्तरेषु च परमकोविदं पाण्डित्यं प्रापत् । स चामरगुरुवद्वाक्पतित्वाद्वागीश्वर इति च गुरुदत्तनामवशाद्राहुल इति च विदितो विश्रुतश्च बभूव । स तु यतिप्रवरोऽपरभागे राज्ञा पराक्रमबाहुना लङ्कायां सङ्घराजधुरि नियुक्तः ॥

सोपि सङ्घराजवरो नैकगुणगणसमन्वागतः शीलवान् गुणवान् कीर्तिमान् दयालु-

---

(१) ये शुभस्य बलार्थस्य भीता मौर्यकुलोद्भवाः ।
पलाय्य मनुजावासञ्चक्रुस्ते तत्र तत्र हि ॥
तेषामन्यतमो नन्दीवापिग्रामे कुटुम्बिकः ।
धातुसेनाह्वय आसीद्दाठानामस्तु तत्सुतः ॥
पण्डुलब्राह्मणो नाम भोगवान् वेदपारगः ।
दक्षिणस्यां दिशायान्त्ववसत्पण्डुलग्रामके ॥
कुमारस्तत्र गत्वाथाद्राक्षीत्पण्डुलब्राह्मणम् ।
त्वं पण्डुकाभयस्तात ! इति पृष्ट्वापि व्याकृतः ॥ ( इति संस्कृतम् )

र्बहुभिर्विद्वद्भिः पूजितः संमानितश्चाभूत् । स तु सङ्घराजवरस्ततः पश्चाद्बहूनां भिक्षुगणानामनुशासनीं कुर्वन् राज्ञः पराक्रमबाहोस्त्रिपिटकबुद्धवचनानि कथयंस्तं च नृपतिवरं दशसु पुण्यकर्मसु नियोजयंश्च कंचित्कालं जयवर्द्धनाख्ये नगरे कंचित्कालं तीर्थग्रामे विजयबाहुनामके आश्रमे च न्यवसत् । यदा यदा जयवर्द्धनाख्ये नगरे विहरन् राज्ञः पराक्रमबाहोर्धर्मदानादिना समग्रहीच्च । तदेवं तत्कृते पञ्चिकाप्रदीपनाम्नि प्रशस्ततमव्याकरणग्रन्थेऽपि दृश्यते । तद्यथा,—

(२) "आदिच्चवंसकमलाकरभाकरेन
राजिन्दमोलिमणिरञ्जितसासनेन ।
लङ्किस्सरेन वयमत्तजपेमबुद्ध्या
संवड्ढिता पितुपदाधिगतेन येन ॥

सत्थन्तरे च विविधे समयन्तरे च
भासन्तरे च सकले पिटकत्तये च ।
आचेरभावमुपगम्म भजाम पीतिं
दीघं स जीवतु परक्कमबाहुराजा" ॥

अपिच ।

राजा परक्कन्तिभुजो यसस्सी
यो सोहलिन्दो बहुपुञ्ञतेजो ।
पोसेसि मं साधुगुणेहि सद्धिं
आबालभावा सुतपेमयुत्तो ॥

---

(२) आदित्यवंशकमलाकरभास्करेण
राजेन्द्रमौलिमणिरञ्जितशासनेन ।
लङ्केश्वरेण वयमात्मजप्रेमबुध्या
संवर्द्धिता पितृपदाधिगतेन येन ॥
शास्त्रान्तरे च विविधे समयान्तरे च
भाषान्तरे च सकले पिटकत्रये च ।
आचार्य्यभावमुपगम्य मुदं भजामो
दीर्घं स जीवतु पराक्रमबाहुराजा ॥
राजा पराक्रान्तिभुजो यशस्वी
यः सिंहलेन्द्रो बहुपुण्यतेजाः ।
पुपोष मां साधुगुणैश्च सार्द्ध-
माबालभावात्सुतप्रेमयुक्तः ॥

**रञ्ञो कुसग्गीयमतिस्स तस्स**
**संवण्णयन्तो पिटकत्तयत्थं।**
**समादपन्तो दसपुञ्ञकम्मे**
**वसं पुरस्मिं जयवड्ढनव्हे" ॥ ( इति शुद्धमागधी )**

तदा सोऽयं श्रीरामचन्द्रकविभारतिः श्रीराहुलसङ्घराजवरमुपसंक्रम्य दर्शनकथनपरिप्रश्नादिना तस्मिन्नतीव प्रसन्नः सन् सविनयं सगौरवं प्रणमतिस्म। पुनरात्मनः शिष्यभावं च निवेदयामास। ततः प्रभृति तत्सकाशे सुपरिशुद्धं सुनिर्मलं बौद्धधर्मं समुद्गृह्णन् महत्या धिषणया चातुर्याद्बुद्धिप्रभावादचिरादेव सकलेषु बुद्धवचनेषु कोविदो गाढभक्तिमान् बौद्धोपासकश्च बभूव। तदपि तेनैवोक्तम्। तद्यथा—,

**"श्रीमद्राहुलपादतस्त्रिपिटकाचार्याद्गुरोर्निर्मलं**
**बौद्धं शास्त्रमधीत्य यस्तु शरणं रत्नत्रयं शिश्रिये"। इति ॥**

यदाऽयं कविभारतिः श्रीराहुलसङ्घराजवरमुपसंक्रामत्। तदा स यतिसङ्घपतिर्वृद्धवयसि स्थित एव। तद्यथा—,

**"राहुलनामा कोऽपि यतीन्द्रः पण्डितवृन्दं तर्पितुकामः।**
**मौर्यकुलं सत्कर्त्तुमिलायां संप्रति वृद्धो लोकविवृद्ध्यै" ॥ इतिच ॥**

अथ स पण्डितप्रवरः श्रीरामचन्द्रकविभारतिर्बुद्धधर्मसङ्घसङ्ख्यातमत्युत्तमं परमोत्कृष्टं सर्वैः देवमनुष्यैर्वन्दनीयं समर्चनीयं रत्नत्रयं मम शरणं परायणम्। अन्यं शरणं परायणं मम नास्तीति मत्वा तद्वस्तुत्रयमेव शरणमगमत्। तद्यथा–,

**"शरणमिति सदग्रं साधु गच्छामि बुद्धं**
**शरणमिति विरागाग्रीयमन्वेमि धर्मम्।**
**शरणमिति गणानामग्रियं यामि सङ्घं**
**शरणमिति पुनस्त्रीन् द्वित्रिवारं व्रजामि" ॥ इति**

ततः पश्चात्स पण्डितप्रवरः शरणगमनात्संजातप्रीतिसौमनस्यः सन् बौद्धस्तोत्रं कर्तुकामः शतश्लोकात्मकं भक्तिशतकं नाम प्रशस्ततरं ग्रन्थं विरचयामास। तस्यायमादिमः श्लोकः। तद्यथा—,

**"ज्ञानं यस्य समस्तवस्तुविषयं यस्यानवद्यं वचो**
**यस्मिन् रागलवोऽपि नैव न पुनर्द्वेषो न मोहस्तथा।**

---

राज्ञः कुशाग्रीयमतेस्तु तस्य
संवर्णयंस्त्रैपिटकस्य चार्थम्।
समादधानो दशपुण्यकर्मे
वसन् पुरेस्मिञ्जयवर्द्धनाख्ये" ॥ ( इति संस्कृतम् )

यस्या हेतुरनन्तसत्त्वसुखदानदक्षा कृपामाधुरी
बुद्धो वा गिरिशोऽथवा स भगवांस्तस्मै नमः कुर्महे'' इति ॥

स तु तद्ग्रन्थं विरच्य राज्ञे पराक्रमबाहवे प्राभृतं कृत्वा समर्पयत्। स नृपतिवरस्तदृष्ट्वाऽतीव प्रसन्नः प्रमोदं कुर्वन् ''श्रीबौद्धागमचक्रवर्तिरि'' त्यतिशयगौरवतमनामाङ्कितं मणिमुक्तादिसमलंकृतं स्वर्णपट्टं तस्य पण्डितप्रकाण्डस्य ललाटे बद्ध्वा तस्मै मन्त्रिपदं प्रदत्तवानिति । तद्यथा—,

''नृपः पराक्रान्तिभुजो महीभुजां
शिरोमणिः पण्डितमण्डलीसखः ।
स रामचन्द्रं कविभारतिद्विजं
चकार बौद्धागमचक्रवर्त्तिनम्'' ॥ इति ॥

ततः प्रभृति एष कविभारती राज्ञः पराक्रमबाहोः पण्डितसभायां प्रशस्ततमं महार्घं रत्नकिरीटमिव विरराज । स तु पश्चात्काले गच्छति सुब्रह्माणो नाम एकेन पण्डितद्विजवरेण समाराधितः सन् बहूनां छन्दोविद्यार्थिनां हिताय इमां वृत्तरत्नाकरपञ्चिकानामटीकां विरचयामास । तद्यथा–,

''विप्रो विद्वान् विनयभवनो बन्धुभूतः सतां यः
सुब्रह्माणो निपुणगणकग्रामणीः स्कन्दभक्तः ।
तस्याऽस्माभिर्बहुगुणवतः प्रार्थनाभिः कृतेयं
छन्दोविद्याभ्युदयजननी पञ्चिका सन्मुदेऽस्तु'' ॥ इति ॥

अतः पश्चादेष कविभारतिर्वृत्तमालाख्यां नाम वृत्तपरिदीपिकां ग्रन्थमपि विरचयामास । तत्तु पुस्तकं भक्तिशतकं चेति द्वौ ग्रन्थौ मया पूर्वमेव प्रचारितौ । इमां वृत्तरत्नाकरपञ्चिकामपि परिशोध्य प्रचारयितुं महतोत्साहेन च तच्छोधनं कर्तुमारब्धम् । सा तु भूयिष्ठं कालान्तरसंभूतैर्नानादोषगणैर्दूषिता स्खलिता च दृश्यते । क्वचिदूनातिरेकपाठैश्चातीवाकुलिता । क्वचिदप्युदाहरणानामूनता विसदृशता च दृश्यते । अथापि महोत्साहेन चत्वारि आदर्शपुस्तकानि लब्ध्वा तैः पुस्तकैः समं सम्यग्विलोच्य अपरेषां काव्यच्छन्दोग्रन्थानां साहाय्यं च लब्ध्वा यथामति परिशोधिता । बालानां सुखावबोधार्थं गुरुलघुविन्यासक्रमेण तत्र तत्र स्थलेषु गणानपि संदर्शयन् यथावत्प्रतिपादिता । अपरांश्छन्दोग्रन्थानवलोक्य विशेषार्थावबोधाय तत्र तत्र स्थलेषु पाठान्तराणि च परिदर्शितानि । यानि यानि वृत्तरत्नाकरेषु वा पञ्चिकासु वा विशेषपाठान्तराणि दृश्यन्ते तान्यत्राप्यधो लिखितानि । क्वचित्तु मत्कृतटीकापाठैः सार्द्धमेव दर्शितानीति ज्ञातव्यम् । परन्त्वस्मिन् पुस्तके गुरुलघुविन्यासे गुरुरेखा ˘ईदृशी । लघुरेखा–ईदृश्येव संन्यस्ता ।

केश्चिद्भारतदेशीयैर्गुरुरेखा ऽ ईदृक् । लघुरेखा ।ईदृक्कृता दृश्यते। पूर्वीयेषु सिंहलाक्षर-लिखितेषु पुस्तकेषु गुरुरेखा ८ईदृक् लघुरेखा ।ईदृक्कृता दृश्यते । तत्तु विशेषं विद्वद्भिरेव मीमांसनीयम् ॥

अपि चास्यां वृत्तरत्नाकरपञ्चिकायां षडेवाध्याया भवन्ति । तेषां प्रथमेऽध्याये संज्ञाप्रतिपादनादिवर्णना च । द्वितीये आर्या–गीति–वैतालीय–वक्त्र–मात्रासमक–वृत्त-वर्णना च। तृतीये उक्तात्युक्तादीनां षड्विंशच्छन्दसां वर्णना च। चतुर्थे अर्द्धसमवृत्त-वर्णना च। पञ्चमे पदचतुरूर्द्ध्वा–उद्गता-उपस्थित-प्रचुपितानां वर्णना च । षष्ठे प्रस्तारा-दिषट्प्रत्ययानां वर्णना चाविर्भवति ॥

एतस्य पुस्तकस्य संशोधने मया भूयान् परिश्रमः स्वीकृतः। तथाप्यस्मिन् वारे सर्वथैतत्परिशुद्धमिति वक्तुं न शक्यते । तस्मादेतदवलोकनेऽस्माकं यत्किंचित्स्खलनं सुधीभिरवगम्यते तत्तैर्लोकार्थनिरतैः कृपापरवशगैः परमकारुणिकैर्विद्वद्भिः पठन-पाठनसमये कृपया परिशोधनीयमिति शिवमस्तु ॥

शके १८२९ संवत्सरे
चैत्रमासस्य १५ दिवसे
लङ्कायां दोडन्दुग्रामे
शैलबिम्बारामात् ॥

श्रीशीलस्कन्धयतिवरस्य ॥

॥ श्रीः ॥

# वृत्तरत्नाकरम्

## पञ्चिकाख्यव्याख्यासमलङ्कृतम् ।

### प्रथमोऽध्यायः ।

श्रीगणेशाय नमः ।

सुखसन्तानसिद्ध्यर्थं नत्वा ब्रह्माच्युतार्चितम् ।
गौरीविनायकोपेतं शङ्करं लोकशङ्करम् ॥ १ ॥
वेदान्तशैवशास्त्रज्ञः पव्येकोऽभूद्द्विजोत्तमः ।
तस्य पुत्रोऽस्ति केदारः शिवपादार्चने रतः ॥ २ ॥

---

नमस्तस्मै
भगवतेऽर्हते सम्यक्सम्बुद्धाय ।

प्रणम्य सर्वज्ञमनन्तसद्गुणं समस्तशास्तारमनुत्तरं मुनिम् ।
सुवृत्तरत्नाकरपञ्चिका मया विधीयते बालकबुद्धिवृद्धये ॥

तत्रादौ प्रारिप्सितग्रन्थपरिसमाप्तये निर्विघ्नेनाभिमतेष्टदेवतानमस्कारपुरःसरं शास्त्रस्याभिधेयाभिधानसम्बन्धप्रयोजनानि प्रतिपादयन् पव्येकनाम्नो द्विजोत्तमस्यात्मजः सकलशास्त्रतत्त्वज्ञः केदाराभिधानो विपश्चिदिमान् श्लोकांश्चकार सुखसन्तानसिद्ध्यर्थमित्यादीन् । अत्र प्रथमेन श्लोकेन स्तुतिपूर्वेष्टदेवतानमस्कारः प्रतिपादितः । द्वितीयेन शास्त्रगौरवोत्पादनार्थं ग्रन्थस्य कर्ता अभिहितः । तृतीयेन प्रकरणप्रकारसंज्ञापरिमाणप्रयोजनान्युक्तानीति । अयमिह समुदायार्थः ।

अवयवार्थस्तूच्यते । शङ्करं नत्वा छन्दः क्रियत इति संबन्धः । किंविशिष्टम् ? शङ्करम् । लोकशङ्करम् । लोकानां शं सुखं करोतीति लोकशङ्करः तम् । पुनः किंविशिष्टम् ? गौरीविनायकोपेतम् । गौरी पार्वती विनायको गजाननः गौरी च विनायकश्च गौरीविनायकौ ताभ्याम् उपेतं सहितम् । पुनः किंविशिष्टम्? ब्रह्माच्युतार्चितम् । बृहद् अप्रमेयं शरीरमस्येति ब्रह्मा आत्मभूः । स्वपदान्नास्ति च्युतमस्येति अच्युतो

**तेनेऽदं क्रियते छन्दो लक्ष्यलक्षणसंयुतम्।**
**वृत्तरत्नाकरं नाम बालानां सुखबुद्धये॥ ३॥**
**पिङ्गलादिभिराचार्यैर्यदुक्तं लौकिकं द्विधा।**
**मात्रावर्णविभेदेन छन्दस्तदिह कथ्यते॥ ४॥**

---

विष्णुः। ब्रह्मा च अच्युतश्च ब्रह्माच्युतौ ताभ्याम् अर्चितं पूजितम्। शिवं प्रणम्य किमर्थं विधीयत इत्याह सुखसन्तानसिद्ध्यर्थमिति। सुखस्य सन्तानः सुखसन्तानः शर्मपरम्परा तस्य सिद्धिः सुखसन्तानसिद्धिः तस्यै इदं सुखसन्तानसिद्ध्यर्थमिति अर्थशब्देनास्वपदसमासः। अवद्यं छादयतीति छन्दः। तत् किंभूतम्? लक्ष्यलक्षणसंयुतम्। लक्ष्यत इति लक्ष्यम् उदाहरणम्। लक्ष्यतेऽनेनेति लक्षणं सूत्रम्। लक्ष्यञ्च लक्षणञ्च लक्ष्यलक्षणे* ताभ्यां संयुतं संयुक्तम्। पुनः किंभूतम्?। वृत्तरत्नाकरं नाम। वृत्तानि श्रीस्त्रीप्रभृतीन्येव रत्नानि वृत्तरत्नानि तेषाम् आकरमुत्पत्तिस्थानम्। नामेति नामधेयम्। केन क्रियत इति चेत्? तदाह वेदान्त इत्यादिम्। वेदान्तः उत्तरमीमांसा शिवस्येदं शैवम् शिवो देवता अस्येति वा शैवम्। वेदान्तश्च शैवंच वेदान्तशैवे ते च ते शास्त्रे चेति वेदान्तशैवशास्त्रे ते द्वे जानातीति वेदान्तशैवशास्त्रज्ञः। पव्येको नाम द्विजोत्तमोऽभूत्। द्विर्जायन्त इति द्विजाः। "दन्तविप्राण्डजा द्विजाः" इत्यमरः। द्विजानां विप्राणामुत्तमः द्विजोत्तमः। अथवा द्विजश्चासावुत्तमश्चेति द्विजोत्तमः। उत्तमशब्दस्य विशेषणभूतस्य परनिपातोऽभिधानात् पुरुषोत्तमवत्। तस्य पव्येकस्य पुत्रः केदारोऽस्ति। ननु ग्रन्थकर्ता केदारः स्यादिति वक्तव्यम्। कथमस्तीति संबध्यत इति चेत्?। नैवम्। तत्कृतशास्त्रस्य विद्यमानत्वात्तस्यापि वर्त्तमानता। वस्तुतस्तु शास्त्रकरणसमये वर्त्तमानमुद्दिश्य केदारोऽस्तीत्यवदीत् इदानीमप्यस्यार्चनादीनां तदनुकथनत्वान्न दोषः। स किंभूतः? शिवपादार्चने रतः। शिवा च शिवश्च शिवौ। "पुमान् स्त्रिया" इत्येकशेषः। पार्वतीपरमेश्वरौ। तयोः पादश्चरणम्। तेषामर्चनं पूजनम्। †तस्मिन् रत आसक्तः। तेन केदारेण इदं छन्दःशास्त्रं क्रियते प्रकाश्यते। किमर्थम्? बालानां सुखबुद्धये। बाला वृत्तावृत्तविवेकशून्याः। बुद्धिरवबोधः। सुखेन बुद्धिः सुखबुद्धिः तस्यै सुखबुद्धये। अत्र तादर्थ्ये चतुर्थी। तेषां बालानां सुखावबोधायेत्यर्थः॥ १-२-३॥

इह वृत्तरत्नाकराख्ये शास्त्रे तच्छन्दः कथ्यते प्रकाश्यते। तदिति किम्? यल्लौकिकं लोके विदितं छन्दः द्विधा प्रोक्तम्। केन? मात्रावर्णविभेदेन। निमेषोन्मेषाभ्यामन्यतरेण तुलितः कालः मात्रा। तस्मिन् काले यो वर्ण उच्चार्यते स एकमात्रः। तथा चोक्तम्—

---

* लक्ष्यञ्च तल्लक्षणं चेति कर्मधारयमेव वाञ्छति भास्करः। † तत्रेति पाठान्तरम्।

षडध्यायनिबद्धस्य छन्दसोऽस्य परिस्फुटम् ।
प्रमाणमपि विज्ञेयं षट्त्रिंशदधिकं शतम् ॥ ५ ॥
म्यरस्तजभ्नगैर्लान्तैरेभिर्दशभिरक्षरैः ।
समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना ॥ ६ ॥
सर्वगुर्मो मुखान्तर्लौ यरावन्तगलौ सतौ ।
ग्मध्याद्यौ ज्भौ त्रिलो नोऽष्टौ भवन्त्यत्र गणास्त्रिकाः ॥ ७ ॥

"एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते ।
त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं त्वर्द्धमात्रकम्" ॥

अत्र वर्णा अकारादयः । तेषां वर्णानां मात्राभेदेन वर्णभेदेन च द्विप्रकारेण कथितमित्यर्थः । कैः प्रोक्तम्? आचार्यैः । तैः किंभूतैः? पिङ्गलादिभिः । पिङ्गलो नाम मुनिश्छन्दसामादिकर्ता । आदिशब्दोऽत्र प्रकारवचनः । पिङ्गल एवादिर्येषां सैतवनागवर्द्धमानप्रभृतीनां ते पिङ्गलादयः । बहुव्रीहिः । तैः ॥ ४ ॥

प्रमीयते अनेनेति प्रमाणम् । अस्य छन्दसः एतस्य छन्दःशास्त्रस्य प्रमाणमपि परिस्फुटं सुव्यक्तं* यथा स्यात्तथा विज्ञेयम् । क्रियाविशेषणानां कर्मत्वमेकत्वं नपुंसकत्वं चेति वचनात् परिस्फुटशब्दस्य कर्मत्वादि सिद्धम् । अस्य किंविशिष्टस्य? षडध्यायनिबद्धस्य । अध्यायो ग्रन्थानां सन्धिः षट् च ते अध्यायाश्चेति षडध्यायाः । तैर्निबद्धस्य निश्चितस्य । कीदृशं प्रमाणम्? शतम् । किंभूतम्? षट्त्रिंशदधिकम् । षट् च त्रिंशच्च षट्त्रिंशत् । अथवा षड्भिरधिका त्रिंशत् षट्त्रिंशत् । शाकपार्थिवादित्वान्मध्यपदलोपी समासः । तया षट्त्रिंशता अधिकम् अतिरिक्तम् । एतेन ग्रन्थगौरवभीरूणां बालानां प्रवृत्तिरत्र ग्रन्थकृता दर्शिता ॥ ५ ॥

एभिर्दशभिरक्षरैर्वाङ्मयं वचनमयं शास्त्रं समस्तं व्याप्तम् । कैः? म्यरस्तजभ्नगैः म्च यश्च रश्च स्च तश्च जश्च भ्च नश्च गश्च म्यरस्तजभ्नगाः तैः । किंभूतैः? लान्तैः लो लघुरन्तेऽवसाने येषां ते लान्ताः तैः मगणयगणरगणसगणतगणजगणभगणनगणगुरुलघुभिः । कथमिव व्याप्तम्? विष्णुना नारायणेन त्रैलोक्यमिव । त्रयो लोका एव त्रैलोक्यम् ।

"यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" इति श्रुतिः ॥ ६ ॥

त्रीणि परिमाणानि येषां ते त्रिकाः । अत्र इह छन्दसि त्रिभिस्त्रिभिरक्षरैरष्टौ गणा भवन्ति । के ते गणाः? मयरसतजभनाः । एषां प्रत्येकं लक्षणमाह सर्वगुर्म इत्यादि । सर्वे गुरवस्त्रयो गुरुवर्णा यस्मिन् स सर्वगुः । कोऽसौ? मः मगण इति । मुखमादिः

* 'प्रव्यक्तं यथा स्याद्विज्ञेयमिति' पाठान्तरम् ।

**ज्ञेयाः सर्वादिमध्यान्तगुरवोऽत्र चतुष्कलाः ।**
**गणाश्चतुर्लघूपेताः पञ्चार्यादिषु संस्थिताः ॥ ८ ॥**
**सानुस्वारो विसर्गान्तो दीर्घो युक्तपरश्च यः ।**
**वा पादान्ते त्वसौ ग्वक्रो ज्ञेयोऽन्यो मात्रिको लृजुः ॥ ९ ॥**

अन्तरभ्यन्तरम् । तयोरादिमध्ययो र्लौ लघुः ययोर्गणयोः तौ मुखान्तलौ । कौ तौ ? यरौ यगणरगणौ । अन्ते अवसाने गलौ गुरुलघू ययोः तौ अन्तगलौ । कौ तौ ? सतौ सगणतगणौ । मध्यश्च आद्यश्च मध्याद्यौ । गौ गुरू मध्याद्यौ ययोः तौ ग्मध्याद्यौ । कौ तौ ? ज्भौ जगणभगणौ । त्रयो लघवो यस्मिन् सः त्रिलः । कोऽसौ ? नः नगण इति । तथा चोक्तम्—

"मस्त्रिगुरुस्त्रिलघुश्च नकारो
भादिगुरुः पुनरादिलघुर्यः ।
जो गुरुमध्यगतो रलमध्यः
सोऽन्तगुरुः कथितोऽन्तलघुस्तः ॥

अपिच ।

"उर्वीं मस्त्रिगुरुः श्रियं वितनुते नश्च त्रिलो जीवितं
रोऽग्निर्मध्यलघुः स्मृतिं सपवनो देशभ्रमं प्रान्तगः ।
यो वार्यादिलघुर्धृतिं दिनमणिर्मध्ये गुरुर्जो रुजां
धत्ते मूर्द्धलघुः क्षयं गुरुमुखे भस्तारकेशो यशः ॥" इति ॥ ७ ॥

इदानीमार्यादीनां गणानां नामान्याचष्टे । अत्र अस्मिंश्छन्दःशास्त्रे पथ्यार्यादिषु वृत्तेषु संस्थिताः गणाश्चतुष्कला ज्ञेया ज्ञातव्याः । चतस्रः कलाः मात्राः येषां ते तथोक्ताः । किंभूताः ? सर्वादिमध्यान्तगुरवः । सर्वश्च आदिश्च मध्यश्च अन्तश्च सर्वादिमध्यान्ताः । द्वन्द्वात्परं श्रूयमाणः शब्दः प्रत्येकमभिसंबध्यत इति न्यायात् गुरुशब्दः प्रत्येकमभिसंबध्यते । सर्वस्मिन् आदौ मध्ये अन्ते च गुरवः गुरुवर्णाः येषां ते तथोक्ताः । पुनः किंभूताः चतुर्लघूपेताः । चत्वारश्च ते लघवश्चेति चतुर्लघवः । तैरुपेताः समेताः ॥ ८ ॥

अनुस्वारेण सह वर्तत इति सानुस्वारः । विसर्गो विसर्जनीयोऽन्ते यस्य स विसर्गान्त इति व्यधिकरणोऽयं बहुव्रीहिः । इह ह्रस्वादन्यो दीर्घः । युक्तपरः युक्तं संयुक्तमक्षरं परे यस्य स युक्तपरः । यः सानुस्वारो भवति । यो विसर्गान्तो भवति । यो दीर्घो भवति । यो युक्तपरश्च भवति असौ ग् द्विमात्रो गुरुः स्यात् । अत्र विसर्जनीयग्रहणेन जिह्वामूलीयोपध्मानीययोरपि ग्रहणम् । तदादेशत्वात् यो जिह्वामूलीयो भवति । य उपध्मानीयान्तो भवति । सोपि गुरुः स्यात् । किंभूतः ? वक्रः प्रस्ताररेखा वक्राकृतिः । उक्तञ्च— "गुरुं प्रस्तारकरणे वक्रं कृत्वा तु विन्यसे" दिति । वा पादान्ते तु । असौ

**पादादाविह वर्णस्य संयोगः क्रमसंज्ञितः ।**
***परस्थितेन तेन स्याल्लघुतापि क्वचिद्गुरोः ॥ १० ॥**

इदमस्योदाहरणम् ।

**तरुणं सर्षपशाकं नवौदनं पिच्छिलानि च दधीनि ।**
**अल्पव्ययेन सुन्दरि! ग्राम्यजनो मिष्टमश्नाति ॥ ११ ॥**
**अब्धिभूतरसादीनां ज्ञेयाः सङ्ख्यास्तु लोकतः ।**
**ज्ञेयः पादश्चतुर्थांशो यतिर्विच्छेदसंज्ञकः ॥ १२ ॥**

---

पादान्ते तु वा विकल्पेन । गुरुर्ज्ञेयो ज्ञातव्यः । मात्रा परिमाणमस्येति मात्रिकः । अन्यो गुरुवर्णादितरो मात्रिक एकमात्रो ल् लघुवर्णः ऋजुरवक्रः प्रस्ताररेखा अवक्रो वेदितव्यः । उक्तञ्च "लघुवर्णमृजुं सम्यग्विदधीत विचक्षण" इति ॥ ९ ॥

पद्यस्य चतुर्थांशः पादः तस्यादिः पादादिः । इह शास्त्रे पादादौ वर्णस्य अक्षरजातेः संयोगः क्रमसंज्ञितो भवतीत्यध्याहार्यम् । यत्र क्रियापदं नास्ति तत्र अस्ति भवतीत्यध्याहार्यमिति हि वृद्धाः । क्रम एव संज्ञा क्रमसंज्ञा । सा संजाता अस्येति तारकितादित्वादितच् प्रत्ययः । परस्मिन् स्थितः परस्थितः । परस्थितेन तेन क्रमाख्येन हेतुभूतेन पूर्वस्थितस्य गुरोर्वर्णस्यापि क्वचित् कुत्रचित् लघुता लघुत्वं स्यात् ॥ १० ॥

एतस्योदाहरणमाह । सुन्दरि हे कान्ते! ग्राम्यजनः अल्पव्ययेन ईषद्धनव्ययेन मिष्टमश्नाति मधुरं भुङ्क्ते । किं तन्मिष्टम्? सर्षपशाकम् सर्षपस्य शाकं सर्षपशाकम् । किंभूतम्? तरुणं कोमलम् । नवौदनम् नवं च तत् ओदनंचेति विशेषणसमासः । नूतनशाल्यम् । पिच्छिलानि च दधीनि । पिच्छिलानीति दध्नो विशेषणम् । पिच्छिलानि सरसानीत्यर्थः । सुन्दरि ग्राम्यजन इत्यत्र ग्राम्य इत्यस्मिन् क्रमसंज्ञिते परे गुरुभूतस्येकारस्य लघुत्वं भवतीति सुन्दरीत्यत्र चतुर्मात्र एव गणो जायत इत्यर्थः ॥ ११ ॥

लोकः शास्त्रकारः । अथवा लोक्यते ज्ञायते शब्दार्थसम्बन्धोऽस्मिन्नित्यधिकरणसाधनेन तद्व्यवहारो वा लोकः । तस्माल्लोकव्यवहारात् । अब्धिभूतरसादीनां सङ्ख्या गणनास्तु ज्ञेयाः ज्ञातव्याः बुद्धिमद्भिरिति शेषः ॥ तद्यथा अब्धयश्चत्वारः । भूतानि पञ्च । रसाः षट् । आदिशब्दात्स्वराः सप्त वसवोऽष्टौ ग्रहा नवेत्यादीनां ग्रहणम् । चतुर्णां पूरणश्चतुर्थः पद्यस्य प्रथमो द्वितीयस्तृतीयश्च पादः क्रमेणाऽप्युत्क्रमेण वा चतुर्थो भवति । तेनापि चतुर्णां पूरणत्वात् वृत्तस्य चतुर्थो भागः पादः ज्ञेयः वेदितव्यः । यमनं यतिः विरामः जिह्वेष्टविश्रामस्थानमिति यावत् । यदुक्तं काव्यादर्शे "श्लोकेषु † विश्रमस्थानं पदच्छेदं यतिं विदु"रिति । पिङ्गलेन तु– "अधा-

---

* अत्र "संज्ञकः" इति "पुरःस्थितेने"ति च केचित्पठन्ति ॥ † 'नियतस्थानमि'ति कलिकातायां मुद्रितकाव्यादर्शे ।

युक् समं विषमंचायुक् स्थानं सद्भिर्निगद्यते ।
सममर्द्धसमं वृत्तं विषमं च *त्रिधा मतम् ॥ १३ ॥
अंघ्रयो यस्य चत्वारस्तुल्यलक्षणलक्षिताः ।
तच्छन्दःशास्त्रतत्त्वज्ञाः समं वृत्तं प्रचक्षते ॥ १४ ॥
प्रथमाङ्घ्रिसमो यस्य तृतीयश्चरणो भवेत् ।
द्वितीयस्तुर्यवद्वृत्तं तदर्द्धसममुच्यते ॥ १५ ॥

---

तुनामभेदेन विरामो विरतिर्यतिः । स्वरसन्ध्याप्तसौन्दर्यात्तद्भेदेऽपीष्यते क्वचि''दिति । अत्र अधातुनामभेदेनेति धातूनां वा नाम्नां वा प्रातिपदिकानां वा अभेदेन यतिः स्यात् । तद्यथा,–''शोभां पुष्यत्यधिकमधिकमि'' त्यत्र ''मन्दाक्रान्ता जलधिषडगैम्भौं नतौ तो गुरू चे''दिति वचनाच्चतुर्भिरक्षरैर्यतेर्भावत्वात् । पुष्यतीत्यस्मिन् पदे प्रत्ययवशाद्भिन्नेपि पुष इति धातोरभेदान्न दोषः । ''स्पर्शक्लिष्टामसमितनखेनासकृत्सारयन्ती''मित्यत्र मन्दाक्रान्ते दशभिरक्षरैर्यतेर्भावात् ''असमितनखेने''ति पदे प्रत्ययवशाद्भिन्नेऽपि नखशब्दाभेदान्न दोषः । ''मेघालोके भवति सुखिनोप्यन्यथावृत्तिचेत'' इत्यत्र अपिशब्दे भिन्नेपि पूर्वरूपेण स्वरसन्धिवशात् सौन्दर्यमस्तीतीष्यत एव । केचित् कवयो यतिभङ्गदोषमदोषमाहुः । दृश्यते महाकविप्रयोगे । यथाऽनर्घराघवनामनाटके–''याच्ञादैन्यपराञ्चि यस्य कलहायन्ते मिथस्त्वं वृणु त्वं वृणित्यभितो मुखानि स दशग्रीवः कथं कथ्यता''मि त्यत्र ''सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडित''भिति वचनाद्द्वादशभिर्वर्णैर्यतेर्भवितव्यत्वात् कलहाय इति धातोर्भेदेप्यदोषं विदधाति । ''यावच्छृङ्गारसारस्वतमिह जयदेवस्य विष्वग्वचांसी''तिच गीतगोविन्दाख्ये काव्ये । अत्र जयदेव इति नाम्नि यतिभङ्गेपि न दोषः । ''कविवरादिभिर्मुदं यास्यती'' त्यादिष्वपि नास्ति दोषः । विच्छेद इति संज्ञा यस्य स विच्छेदसंज्ञकः । स्वार्थे कः । ''उक्तार्थानामप्रयोग'' इति वचनात् समासेनैवोक्तत्वादितिशब्दस्याप्रयोगः ॥ १२ ॥

सद्भिः पण्डितैः समं स्थानं युगिति निगद्यते कथ्यते । किंतत्? द्वितीयचतुर्थादि । विषमं स्थानं अयुगिति निगद्यते । किंतत्? प्रथमतृतीयादि । तथा सद्भिः वृत्तं पद्यं त्रिधा त्रिप्रकारं मतं कीर्तितम् । तद्यथा । समं वृत्तम् अर्द्धसमं वृत्तं विषमं वृत्तञ्चेति ॥ १३ ॥

छन्दःशास्त्रतत्त्वज्ञाः छन्दःशास्त्रनिपुणाः तद्वृत्तं समं प्रचक्षते भाषन्ते । तदिति किम्? यस्य वृत्तस्य चत्वारोऽङ्घ्रयः तुल्यलक्षणलक्षिताः तुल्यं समानं च तल्लक्षणंचेति कर्मधारयः । तेन लक्षिता तुल्यलक्षणलक्षिता इति ॥ १४ ॥

त्रयाणां पूरणस्तृतीयः । यस्य वृत्तस्य प्रथमाङ्घ्रिसमः आदिपादसदृशः तृतीयश्चरणो

---

* ''तथापर''मिति पाठान्तरम् ।

यस्य पादचतुष्केऽपि लक्ष्म भिन्नं परस्परम् ।
तदाहुर्विषमं वृत्तं छन्दःशास्त्रविशारदाः ॥ १६ ॥
आरभ्यैकाक्षरात्पादादेकैकाक्षरवर्द्धितैः ।
पृथक् छन्दो भवेत्पादैर्यावत् षड्विंशतिं गतम् ॥ १७ ॥
तदूर्ध्वं चण्डवृष्टयादिदण्डकाः परिकीर्तिताः ।
शेषं गाथास्त्रिभिः षड्भिश्चरणैश्चोपलक्षिताः ॥ १८ ॥
उक्तात्युक्ता तथा मध्या प्रतिष्ठा सुप्रतिष्ठिता* ।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥ १९ ॥
त्रिष्टुप् च जगती चैव तथातिजगती मता ।
शक्करी सातिपूर्वा स्यादष्टयत्यष्टी ततः स्मृते ॥ २० ॥

---

भवेत् तृतीयः पादः स्यात् । द्वयोः पूरणः द्वितीयः । तस्य वृत्तस्य द्वितीयपादः तुर्यवत् चतुर्थपादवद्भवेत् । तद्वृत्तम् अर्धसममुच्यते कथ्यते । मुनिभिरिति शेषः ॥ १५ ॥

छन्दःशास्त्रविशारदाः छन्दःशास्त्रप्रवीणाः तद्वृत्तं विषममाहुः विषमं ब्रुवते । तदिति किम् ? यस्य वृत्तस्य पादचतुष्केपि चतुर्षु पादेष्वपि परस्परम् अन्योन्यम् भिन्नं लक्ष्म अन्यदन्यल्लक्षणं भवति । चत्वारि परिमाणान्यस्येति चतुष्कम् । "सङ्ख्याया अतिशदन्तायाः क"निति कन् प्रत्ययः ॥ १६ ॥

एकमक्षरं यस्य पादस्य स एकाक्षरपादः । तस्मात्पादादारभ्य यावत् षड्विंशतिंगतम् यावत् षड्विंशत्यक्षरान्वितं भवति तावत् । पृथक् प्रत्येकं छन्दो भवेत् । कैः ? पादैः किंभूतैः ? एकैकाक्षरवर्धितैः एकंचैकं च एकैकम् । तच्च तदक्षरं चेति एकैकाक्षरम् । तेन वर्द्धितैः वृद्धिं गतैरिति ॥ १७ ॥

चण्डवृष्टिरेव आदिर्येषामर्णार्णवप्रभृतीनां ते चण्डवृष्टयादयः । तेच ते दण्डकाश्चेति चण्डवृष्टयादिदण्डकाः । दण्डकाः वृत्तविशेषाः । तदूर्ध्वं षड्विंशत्यक्षरपादादुपरि परिकीर्तिताः कथिताः । शेषं यथोक्तसामान्यविशेषलक्षणादन्यत् छन्दो गाथा नाम । ताः किंभूताः ? त्रिभिश्चरणैः त्रिभिः पादैः । षड्भिः पादैः । उपलक्षिताः चिह्निताः स्युः । गाथा इति पदं बहुवचनान्तमपि शेषमित्यनेन समानाधिकरणमेव । यथा वेदाः प्रमाणम् । स्मृतयः प्रमाणमिति ॥ १८ ॥

अधुना तान्येव षड्विंशति छन्दांसि गणयित्वा दर्शयन्नाह उक्तेति । उक्ता अत्युक्ता

---

* 'प्रतिष्ठाऽन्या सुपूर्विके'ति पाठान्तरम् ।

धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिराकृतिः ।
विकृतिः सङ्कृतिश्चैव तथातिकृतिरुत्कृतिः* ॥ २१ ॥

इत्युक्ताश्छन्दसां संज्ञाः क्रमशो वच्मि साम्प्रतम् ।
लक्षणं सर्ववृत्तानां मात्रावृत्तानुपूर्वकम् ॥ २२ ॥

इति वृत्तरत्नाकराख्ये छन्दसि
प्रथमोऽध्यायः ॥

---

## द्वितीयोध्यायः ।

लक्ष्मैतत्सप्तगणा गोपेता भवति नेह विषमे जः ।
षष्ठोऽयं च नलघु वा प्रथमेऽर्धे नियतमार्यायाः ॥ २३ ॥

---

मध्या प्रतिष्ठा सुप्रतिष्ठा गायत्री उष्णिक् अनुष्टुप् बृहती पङ्क्तिः त्रिष्टुप् जगती अतिजगती शक्वरी अतिशक्वरी अष्टी अत्यष्टी धृतिः अतिधृतिः कृतिः प्रकृतिः आकृतिः विकृतिः सङ्कृतिः अतिकृतिः उत्कृतिश्चेति षड्विंशतिः ॥ १९-२०-२१ ॥

इति उक्तप्रकारेण छन्दसां संज्ञा छन्दोनामानि उक्ताः गदिताः सूत्रकारेणेति शेषः । मात्रावृत्तानाम् आर्यावैतालीयप्रभृतीनाम् । अनुपूर्वं क्रमो यस्मिन् वचन इति विग्रहः । स्वार्थे कः । मात्रावृत्तानुपूर्वकं यथा स्यात् । सर्वेषां वृत्तानां लक्षणं सूत्रं क्रमशः क्रमेण साम्प्रतमिदानीं वच्मि वदामि ॥ २२ ॥

इति श्रीशाक्यमुनेर्भगवतः सर्वज्ञस्य परमोपासकेन गौडदेशवास्तव्येन श्रीबौद्धागमचक्रवर्तिना भूसुरेणाऽचार्येण विरचितायां वृत्तरत्नाकरपञ्चिकायां संज्ञाप्रतिपादनो नाम प्रथमोऽध्यायः ॥

अथेदानीमार्यादिवृत्तानां लक्ष्यलक्षणान्याऽचष्टे । आर्यायाः आर्यावृत्तस्य प्रथमेऽर्धे पूर्वपादद्वये एतन्नियतं लक्ष्म इदं निश्चितं चिह्नम् । एतदिति किम् ? सप्तगणाः गणाः सप्त स्युः । किंविशिष्टाः ? गोपेताः गेन गुरुणा उपेताः । अन्ते गुरुसहिता इत्यर्थः । भवति नेह विषमे जः इह आर्यायाम् विषमे प्रथमतृतीयपञ्चमसप्तमे स्थाने । जो न भवति जगणो न स्यात् । षष्ठोऽयं नलघु वा । षण्णां पूरणः षष्ठः । अयं जगण एव वा षष्ठो भवति । षष्ठे स्थाने नाऽन्यो गण इति । चकारोऽयं वार्थे । वाशब्दोत्र समुच्चये । अव्ययानामनेकार्थत्वात् । नश्च लघुश्च नलघु । समाहारद्वन्द्वे नपुंसकम् । चतुर्लघुगण इत्यर्थः ॥ २३ ॥

---

* अत्र 'युग्म'मिति पाठः केषुचित्पुस्तकेषु दृश्यते ।

षष्ठे द्वितीयलात्परके न्ले मुखलाच्च स यतिपदनियमः ।
चरमेऽर्धे पञ्चमके तस्मादिह भवति षष्ठो लः ॥ २४ ॥
त्रिष्वंशकेषु पादो दलयोराद्येषु दृश्यते यस्याः ।
पथ्येति नाम तस्या*श्छन्दोविद्भिः समाख्यातम्† ॥ २५ ॥

न् च लश्च न्लमिति समाहारोऽयं द्वन्द्वः । षष्ठे गणे न्ले नगणलघुके सति । द्वितीयलात् द्वितीयलघुतः सकारात्पूर्वम् । यतिपदनियमो भवति यतिपदस्य नियमः यतिपदनियमः । द्वितीयलादिति दिग्योगलक्षणे पञ्चमी । तेन षष्ठो गणश्चतुर्लघुर्भवति । तदा तस्य चतुर्लघोर्गणस्य द्वितीयं लघुसकारं परित्यज्यं प्रथमेनैव लघुना चकारेण पूर्वपदसमाप्तिर्भवति । परक इति षष्ठापेक्षया परत्वम् । परके परस्मिन् सप्तमे गणे च न्ले नलघुके सति । मुखलात्स यतिपदनियमः । मुखलात्प्रथमाल्लघुतः पकारात् स यतिपदनियमः । मुखलादिति दिग्योगलक्षणे पञ्चमीलाच्चतुर्णां लघूनां मध्ये प्रथमलघुं परित्यज्य पूर्वस्य षष्ठगणस्यान्ते तिकार एव यतिः स्यादित्यर्थः । एतत्सर्वं पूर्वार्धस्य लक्षणमुक्तम् । चरमेऽर्धे अपरार्धे । पञ्चमके पञ्चमे गणे न्ले नलघौ सति तस्मान्मुखलात्प्रथमलघोरिकारात् पूर्वस्य चतुर्थगणस्यान्ते स्माकार एव यतिपदनियमः स्यात् । इह भवति षष्ठो लः । इह पश्चिमे दले लः लघुरेक एव षष्ठो गणो भवति । तद्यथा,—

भ० १ भ० २ द्वि० ३ भ० ४ द्वि० ५ ज० ६ स० ७ गु०

देवपराक्रमबाहु–र्बाहुजचूडाग्रमण्डितपदाब्जः ।

भ० १ भ० २ द्वि० ३ द्वि० ४ स० ५ ल० ६ द्वि० ७ गु०

श्रीघनशासनवृद्ध्यै गोत्रं तरणे-र-लञ्चके ॥

भ० १ भ० २ द्वि० ३ द्वि० ४ द्वि० ५ सर्व० ६ सर्व० ७ गु०

रूपविनिर्जितकामः श्रीमान् सर्वज्ञचरणदृढभजनः ।

भ० १ भ० २ द्वि ३ ज० ४ सर्व० ५ ल० ६ द्वि० ७ गु०

वीरपराक्रमबाहु श्चिरस्यमवतिहि महीं धर्मैः ॥ २४ ॥

छन्दांसि विदन्तीति छन्दोविदः । तैश्छन्दोविद्भिराचार्यैः तस्याः नाम पथ्येति

* "प्रकीर्तितं नागराजेने"ति पाठान्तरम् ॥

† इहापि शिष्यशिक्षार्थं पुस्तकान्तरपाठो लिख्यते ।
एकैव भवति पथ्या विपुलास्तिस्रस्ततश्चतस्रस्ताः ॥
चपला भेदैस्त्रिभिरपि भिन्ना इति षोडशार्याः स्युः ॥
गीतिचतुष्टयमित्थं प्रत्येकं षोडशप्रकारं स्यात्।
साकल्येनार्याणामशीतिरेव भेदा स्युः ॥

समाख्यातम् पथ्येति कथितम् । तस्या इति कस्याः ? यस्या आर्यायाः दलयोर्द्वयोः पूर्वार्धपरार्धयोः आद्येषु प्रथमेषु त्रिष्वंशकेषु त्रिषु भागेषु पादो दृश्यते त्रिभिस्त्रिभिर्गणैः प्रथमः पादस्तृतीयः पादश्च भवति । तद्यथा,—

स०१ ज०२ द्वि०३ द्वि०४ द्वि०५ ज०६ द्वि०७ गु०

**मतिमान् स धर्मवेत्ता नेता लोकस्य यः समस्तस्य ।**

भ०१ भ०२ द्वि०३ ज०४ द्वि०५ ल०६ द्वि०७ गु०

**भूपपराक्रमबाहुः सदैष संपाति दोषज्ञान् ॥ २५ ॥**

---

तयोरर्थः । एका पथ्या तिस्रो विपुलाः मिलिता एताश्चतस्रो जाताः । पुनरेताश्चपला भेदत्रयैः प्रत्येकं विशेषिताः सत्यो द्वादशान्या आर्या जायन्ते । एताश्च सर्वा मिलित्वा षोडशार्या भवन्ति । एवं गीतिरुपगीतिरुद्गीतिरार्यागीतिश्चैताश्च पूर्वोक्तषोडशभेदैर्विभिन्नाः सत्यः प्रत्येकं षोडश षोडश प्रकारा आर्या जायन्ते । सर्वाश्चैताः पञ्चषोडशसंख्यात्मिका आर्या मिलित्वा अशीतिरुपजायन्ते । पुनरेता अशीतिरार्याः सुखबोधार्थम् अधोधः क्रमेण नामोल्लेखेनापि विन्यस्यन्ते । यथा,—

१ पथ्यार्या ।
२ आदिविपुलार्या ।
३ अन्तविपुलार्या ।
४ उभयविपुलार्या ।
५ मुखचपला पथ्यार्या ।
६ मुखचपलादिविपुलार्या ।
७ मुखचपलान्तविपुलार्या ।
८ मुखचपलोभयविपुलार्या ।
९ जघनचपला पथ्यार्या ।
१० जघनचपलादिविपुलार्या ।
११ जघनचपलान्तविपुलार्या ।
१२ जघनचपलोभयविपुलार्या ।
१३ महाचपला पथ्यार्या ।
१४ महाचपलादिविपुलार्या ।
१५ महाचपलान्तविपुलार्या ।
१६ महाचपलोभयविपुलार्या ।
१७ गीतिपथ्यार्या ।
१८ गीत्यादिविपुलार्या ।
१९ गीत्यन्तविपुलार्या ।
२० गीत्युभयविपुलार्या ।
२१ मुखचपलागीतिपथ्यार्या ।
२२ मुखचपलागीत्यादिविपुलार्या ।
२३ मुखचपलागीत्यन्तविपुलार्या ।
२४ मुखचपलागीत्युभयविपुलार्या ।
२५ जघनचपलागीतिपथ्यार्या ।
२६ जघनचपलागीत्यादिविपुलार्या ।
२७ जघनचपलागीत्यन्तविपुलार्या ।
२८ जघनचपलागीत्युभयविपुलार्या ।
२९ महाचपलागीतिपथ्यार्या ।
३० महाचपलागीत्यादिविपुलार्या ।
३१ महाचपलागीत्यन्तविपुलार्या ।
३२ महाचपलागीत्युभयविपुलार्या ।

३३ उपगीतिपथ्यार्या ।
३४ उपगीत्यादिविपुलार्या ।
३५ उपगीत्यन्तविपुलार्या ।
३६ उपगीत्युभयविपुलार्या ।
३७ मुखचपलोपगीतिपथ्यार्या ।
३८ मुखचपलोपगीत्यादिविपुलार्या ।
३९ मुखचपलोपगीत्यन्तविपुलार्या ।
४० मुखचपलोपगीत्युभयविपुलार्या ।
४१ जघनचपलोपगीतिपथ्यार्या ।
४२ जघनचपलोपगीत्यादिविपुलार्या ।
४३ जघनचपलोपगीत्यन्तविपुलार्या ।
४४ जघनचपलोपगीत्युभयविपुलार्या ।
४५ महाचपलोपगीतिपथ्यार्या ।
४६ महाचपलोपगीत्यादिविपुलार्या ।
४७ महाचपलोपगीत्यन्तविपुलार्या ।
४८ महाचपलोपगीत्युभयविपुलार्या ।
४९ उद्गीतिपथ्यार्या ।
५० उद्गीत्यादिविपुलार्या ।
५१ उद्गीत्यन्तविपुलार्या ।
५२ उद्गीत्युभयविपुलार्या ।
५३ मुखचपलोद्गीतिपथ्यार्या ।
५४ मुखचपलोद्गीत्यादिविपुलार्या ।
५५ मुखचपलोद्गीत्यन्तविपुलार्या ।
५६ मुखचपलोद्गीत्युभयविपुलार्या ।
५७ जघनचपलोद्गीतिपथ्यार्या ।
५८ जघनचपलोद्गीत्यादिविपुलार्या ।
५९ जघनचपलोद्गीत्यन्तविपुलार्या ।
६० जघनचपलोद्गीत्युभयविपुलार्या ।
६१ महाचपलोद्गीतिपथ्यार्या ।
६२ महाचपलोद्गीत्यादिविपुलार्या ।
६३ महाचपलोद्गीत्यन्तविपुलार्या ।
६४ महाचपलोद्गीत्युभयविपुलार्या ।
६५ आर्यागीतिपथ्यार्या ।
६६ आर्यागीत्यादिविपुलार्या ।
६७ आर्यागीत्यन्तविपुलार्या ।
६८ आर्यागीत्युभयविपुलार्या ।
६९ मुखचपलार्यागीतिपथ्यार्या ।
७० मुखचपलार्यागीत्यादिविपुलार्या ।
७१ मुखचपलार्यागीत्यन्तविपुलार्या ।
७२ मुखचपलार्यागीत्युभयविपुलार्या ।
७३ जघनचपलार्यागीतिपथ्यार्या ।
७४ जघनचपलार्यागीत्यादिविपुलार्या ।
७५ जघनचपलार्यागीत्यन्तविपुलार्या ।
७६ जघनचपलार्यागीत्युभयविपुलार्या ।
७७ महाचपलार्यागीतिपथ्यार्या ।
७८ महाचपलार्यागीत्यादिविपुलार्या ।
७९ महाचपलार्यागीत्यन्तविपुलार्या ।
८० महाचपलार्यागीत्युभयविपुलार्या ।

एतासामुदाहरणानि नामानुकूलमूह्यानि । अप्रसिद्धिहेतोर्न तानि ग्रन्थेऽस्मिन् प्रदर्शितानि ॥ अत्र मुखजघनशब्दयोः क्रमेण पूर्वमुत्तरमर्थः । यथा शरीरस्य मुखं पूर्वं जघनं चोत्तरमतोऽत्रापि छन्दःशास्त्रे आर्यापूर्वोत्तरार्धयोः मुखजघनत्वकल्पना । विपुलचपलशब्दयोरपि पूर्वोक्तलक्षणातिक्रमरूपोऽर्थः । यथा वैपुल्यचापल्ययोर्न नियमस्तिष्ठति नियमातिक्रम एव भवति । अतोऽत्रापि तयोः पूर्वोक्तलक्षणातिक्रमरूपार्थो व्यवहारः । आर्योदाहरणेषु तु मुखजघनादिशब्दानां पक्षे प्रकृतार्थोऽपि परिगृह्यते ।

**उल्लङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः ।**
**यस्यास्तां पिङ्गलनागो विपुलामिति समाख्याति ॥ २६ ॥**
**उभयार्धयोर्जकारौ द्वितीयतुर्यौ मध्यगौ यस्याः ।**
**चपलेति नाम तस्याः प्रकीर्तितं नागराजेन ॥ ॥ २७ ॥**
**आद्यं दलं समस्तं भजेत लक्ष्म चपलागतं यस्याः ।**
**शेषे पूर्वजलक्ष्मा मुखचपला सोऽदिता मुनिना ॥ २८ ॥**

---

पिङ्गलनागः शेषः तां विपुलामिति समाख्याति विपुलेति ब्रूते । तामिति का च ? यस्या आर्यायाः शकलयोर्द्वयोः पूर्वार्धपरार्धयोः आदिमं गणत्रयमुल्लङ्घ्य आदिभूतांस्त्रीन् गणान् लङ्घयित्वा चतुर्थे गणार्धे दिममित्यत्र पादो भवति । तद्यथा,—

सर्व०१ म०२ स०३ ज०४ स०५ ज०६ स०७ गु०

**विजयिपराक्रमभुजभूमिपं भजति वैरिवीरकमलेऽयम् ।**

द्वि०१ ज०२ स०३ भ०४ भ०५ ल०६ स०७ गु०

**तेषां च नीतिवनिताभिः सह सङ्गमयति स दृष्ट्वा ॥ २६ ॥**

नागराजेन शेषेण तस्याः नाम चपलेति प्रकीर्तितं कथितम् । तस्या इति कस्याः ? यस्या आर्यायाः उभयार्धयोः द्वयोः शकलयोः द्वितीयतुर्यौ द्वितीयचतुर्थौ जकारौ जगणौ स्याताम् । किंविशिष्टाविति चेत् ? गमध्यगौ गयोर्मध्यं गमध्यं गमध्यं गच्छत इति गमध्यगौ । द्वयोर्गुर्वोर्मध्यगतौ । पूर्वापरयोर्द्विगुरुगणयोर्वा सगणभगणयोर्वा मध्यस्थितावित्यर्थः । तद्यथा,—

स०१ ज०२ द्वि०३ ज०४ द्वि०५ ज०६ द्वि०७ गु०

**सुमते त्रिसिंहलेश ! प्रवीरलक्ष्मीः सुखं समायाति ।**

स०१ न०२ द्वि०३ ज०४ द्वि०५ल०६द्वि०७गु०

**रिपुरक्तपिच्छिले ते कृपाणधारापथे चित्रम् ॥ २७ ॥**

मुनिना पिङ्गलमुनिना सा मुखचपला उदिता मुखचपलेति प्रोक्ता । सा का ? यस्या आर्यायाः आद्यं दलं प्रथमार्धं तत्र चपलागतं समस्तं लक्ष्म भजेत चपलायाः पूर्वार्धे कथितं गुरु द्वयमध्यगतं द्वितीयचतुर्थपादगतं सर्वं लक्षणं भजेत । शेषे अन्यत्र परार्धे पूर्वजलक्ष्मा पथ्यार्याजातलक्षणं स्यात् । लक्ष्म इत्यपि पुस्तकान्तरे पाठः । तदा द्विगुरुगणत्वं न युज्यते । तद्यथा,—

**प्राक्प्रतिपादितमर्धे प्रथमे प्रथमेतरे तु चपलायाः ।**
**लक्ष्माऽश्रयेत सोक्ता विशुद्धधीभिर्जघनचपला ॥ २९ ॥**

**इत्यार्याप्रकरणम् ॥**

---

**आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः ।**
**दलयोः कृतयतिशोभां तां गीतिं गीतवान् भुजङ्गेशः ॥३०॥**

---

द्वि०१ ज०२ द्वि०३ ज०४ द्वि०५ ज०६ द्वि०७ गु०

**लङ्केश ! भूमिजास्ते समीक्ष्य* त्रस्ता भुजेऽसिसर्प ते ।**

द्वि०१ भ०२ द्वि०३ सर्वल०४ द्वि०५ल०६द्वि०७गु०

**त्यक्त्वा राज्यमरातिर्वसति वनेष्वेव तच्चित्रम् ॥ २८ ॥**

विशुद्धा निर्मला धीर्बुद्धिर्येषां ते विशुद्धधियः । तैर्विशुद्धधीभिः पण्डितैः जघनचपला उक्ता जघनचपलेत्यभिहिता । सा का ? या प्रथमेऽर्धे पूर्वस्मिन् दले प्राक्प्रतिपादितं लक्ष्म पूर्वमुदितं पथ्यार्यालक्षणं भजेत् । प्रथमेतरे तु प्रथमादन्यत्र द्वितीये च पुनः चपलायाः लक्षणमाश्रयेत । अत्र सेत्युक्ते अर्थाद्येतिर्लभ्यते यत्तदोर्नित्यसंबन्धात् । तद्यथा,—

भ०१ भ०२ द्वि०३ स०४ स०५ ज०६ द्वि०७ गु०

**नाथ ! पराक्रमबाहो ! तव धामशुचिर्विभात्ययं पूर्वम् ।**

द्वि०१ ज०२ द्वि०३ ज०४ द्वि०५ल०६ सर्व०७ गु०

**वैरिव्रजाङ्गनानां समेधतेऽयं नयनसलिलैः ॥ २९ ॥**

**इत्यार्याप्रकरणम् ॥**

---

इदानीं गीतादिलक्ष्यलक्षणं वक्तुमारभते । भुजङ्गानां सर्पाणामीशो भुजङ्गेशः शेषः तां गीतिं गीतवान् उक्तवान् । किंविशिष्टाम् ? कृतयतिशोभाम् । यतेः शोभा यतिशोभा कृता यतिशोभा यत्र सा तथोक्ता ताम् । तामिति काम् ? । आर्याप्रथमदलोक्तम् आर्यापूर्वार्धे प्रतिपादितं लक्षणं यस्याः उभयोर्दलयोः पूर्वार्धपरार्धयोः यदि कथमपि भवेत् चेत् केनाऽपि प्रकारेण स्यात् । यत्तदोर्नित्यसंबन्धात् यस्या इति लभ्यते । तद्यथा,—

---

* तीव्रप्रयत्नोच्चारणेनाऽत्र लघुत्वमिति कण्ठाभरणः । यदुक्तं ।
यदा तीव्रप्रयत्नेन संयोगादेरगौरवम् । न च्छन्दोभङ्ग इत्याहुस्तदा दोषाय सूरय इति ॥

आर्याद्वितीयकेऽर्धे यद्गदितं लक्षणं तत्स्यात्।
यद्युभयोरपि दलयोरुपगीतिं तां मुनिर्ब्रूते ॥ ३१ ॥
आर्याशकलद्वितयं व्यत्ययरचितं भवेद्यस्याः।
सोऽद्गीतिः किल कथिता तद्वद्यत्यंशभेदसंयुक्ता ॥ ३२ ॥
आर्यापूर्वार्धं यदि गुरुणैकेनाधिकेन निधने युक्तम्।

---

सर्व०१ भ०२ द्वि०३ भ०४ द्वि०५ ज०६ द्वि०७ गु०

जयिनि पराक्रमबाहौ जीवति जीवन्ति संततं ते ते।

स०१ सर्व०२ स०३ द्वि०४ द्वि०५ ज०६ द्वि०७ गु०

बलिकर्णबधिरविमुखास्तेषां कायस्य विद्यमानत्वात् ॥ ३० ॥

मुनिः पिङ्गलो नाम मुनिः तामुपगीतिं ब्रूते वदति । तामिति काम्? आर्याद्वितीयकेऽर्धे आर्यायाः द्वितीये शकले यल्लक्षणं गदितं प्रोक्तम्। तत् अस्याः उभयोरपि दलयोः यदि स्यात् पूर्वार्धपरार्धयोरपि चेद्भवति। तद्यथा,—

सर्व०१ स०२ द्वि०३ स०४ द्वि०५ल०६द्वि०७गु०

व्रजति पराक्रमबाहौ वाहखुरोद्धूतधूलीभिः।

स०१ ज०२ द्वि०३ द्वि०४ द्वि०५ ल०६ द्वि०७ गु०

स्थगितेऽथ सप्तसप्तौ निद्रान्त्यब्जानि मध्याह्ने ॥ ३१ ॥

किल निश्चयेन सा उद्गीतिः गदिता कथिता शेषेणेति शेषः। किंविशिष्टा? तद्वद्यत्यंशभेदसंयुक्ता। यतिः पदविच्छेदःअंशो गणः यतिश्चांशश्च यत्यंशौ। तयोर्भेदः यत्यंशभेदः तेन संयुक्ता। तद्वदिति इवार्थे वतिप्रत्ययः। सेव तद्वत्। वत् प्रत्यय इवेत्यर्थः। सा का? आर्याशकलद्वितयम् आर्यायाः पूर्वार्धपरार्धद्वयम्। यस्याः व्यत्ययरचितं विपर्यासेन व्युत्क्रमेण कृतं भवेत्। तद्यथा,—

स०१ स०२ द्वि०३ स०४ द्वि०५ ल०६द्वि०७गु०

वन्द्यपराक्रमबाहोर्वारणवारा बभूर्बद्धाः।

स०१ स०२ द्वि०३ ज०४ द्वि०५ ज०६ द्वि०७ गु०

वैरिजनाश्रयदानात् कृतापराधा इवाद्रयस्तुङ्गाः ॥ ३२ ॥

इयमार्यागीतिः उदिता कथिता मुनिनेतिशेषः। इयमिति का? आर्यापूर्वार्धम् आर्यायाः प्रथमदलम् अधिकेन अतिरिक्तेन एकेन गुरुणा निधने अन्ते यदि युक्तं

इतरत्तद्वन्निखिलं दलं यदीयमुदितेऽयमार्य्या गीतिः ॥ ३३ ॥

इति गीतिप्रकरणम् ॥

---

षड्विषमेऽष्टौ समे कलाः* षट् च समे स्युर्नो निरन्तराः ।
न समात्र पराश्रिता कला वैतालीयेन्ते रलौ गुरुः ॥ ३४ ॥

---

भवेत् । तदा यदीयं पूर्वार्धं स्यादित्यध्याहार्य योजना कर्तव्या । यस्या इदं यदीयम् । यदीयमितरन्निखिलं दलं सर्वमपरार्धम् तद्वत् पूर्वार्धवत् भवति । तद्यथा,—

भ०१ भ०२ द्वि०३ द्वि०४ द्वि०५ ज०६ स०७ गु० गु०

एष पराक्रमबाहुः सर्वेभ्यः सर्वमेव सततं दत्ते ।

स०१ द्वि०२ द्वि०३ ज०४ स०५ ज०६ भ०७ गु० गु०

इति यद्गीतं तत्तन्नवान्ययुवतेश्च वक्षसः श्रमदानात् ॥ ३३ ॥

इति गीतिप्रकरणम् ।

---

सम्प्रति वैतालीयादि लक्ष्यलक्षणं वक्तुमारभ्यते । अत्र अस्मिन्वैतालीये विषमे अयुक्पादे प्रथमे तृतीये च षट्कलाः स्युः षण्मात्रा भवन्ति । समे युक्पादे द्वितीये चतुर्थे च अष्टौ कलाः स्युः अष्टौ मात्रा भवन्ति । अन्ते अवसाने रलौ गुरुः रगण-लघुर्गुरुश्च स्यात् । विषमपादे षण्णां कलानामन्ते समपादे अष्टानां कलानामन्ते रगणः लघुर्गुरुरेकश्च स्यादित्यर्थः । समे समपादे षट्च कलाः षण्मात्राश्च निरन्तरा अव्यवधानाः । नो स्युः न भवेयुः । क्रमेण षट् लघवो न तिष्ठन्ति । किन्तु गुरुणा सहैव तिष्ठन्तीत्यर्थः । अत्र समा कला समस्थानस्थिता मात्रा पराश्रिता न स्यात् विषमस्थानस्थितां मात्रामाश्रिता न भवति । द्वितीयो लघुस्तृतीयेन लघुना चतुर्थो लघुः पञ्चमेन लघुना षष्ठो लघुः सप्तमेन लघुना एकीभूय गुरुरूपेण तिष्ठन्तीत्यर्थः । तद्यथा,—

मात्रा ६  रगणः ल० गु० मात्रा ८  रगणः ल० गु०

तिष्ठति नवरत्ननायके तेनकृतार्थाः पण्डिता नराः ।

मात्रा ६  र० ल० गु०  मात्रा ८  र० ल० गु०

अमरद्रुमकोटिभिश्च किं ताभिर्वा किमु कामधेनुभिः ॥ ३४ ॥

छन्दसां समीपमुपच्छन्द इत्यव्ययीभावः । तत्र भवं औपच्छन्दसिकम् । सुधीभिः पण्डितैः औपच्छन्दसिकमुक्तं कथितम् । अस्य लक्षणमाह पर्यन्तेर्याविति । पर्यन्ते

---

* 'ताश्चे' ति क्वचित्पाठः ।

**पर्यन्ते यौं तथैव शेषमौपच्छन्दसिकं सुधीभिरुक्तम् ॥ ३५ ॥**
**आपातलिका कथितेऽयं भाद्गुरुकावथ पूर्ववदन्यत् ॥ ३६ ॥**
**तृतीययुग्दक्षिणान्तिका समस्तपादेषु द्वितीयलः ॥ ३७ ॥**

---

विषमपादस्य च समपादस्य च पर्यवसाने यौं रगणयगणौ । तथैवेति यथा वैतालीयवृत्ते विषमपादे षट्कलाः समपादे अष्टौ कलाः भवन्ति । तथैवात्र शेषम् अन्यल्लक्षणं भवतीत्यर्थः । शेषमित्यत्र षकारस्य गुरुत्वं पादान्तादेव सिद्धम् । इदमर्धम् एतद्विरावृत्य पद्यं कर्तव्यम् । तद्यथा,—

मात्रा ६ र० य० मात्रा ८ र० य०

**विविधं यः पुण्यकर्मकर्ता सुमतिपराक्रमबाहुभूमिभर्ता ।**

मात्रा ६ र० य० मात्रा ८ र० य०

**दुःखश्लेषः करोति संदक्‌ कारुणिकः कविवल्लभो महात्मा ॥ ३५ ॥**

अथ अनन्तरम् इयमापातलिका कथिता सुधीभिरिति शेषः । एतस्या लक्षणमाह भाद्गुरुकाविति । विषमपादे च भात् भगणात् परतः गुरुकौ गुरुद्वयं स्यात् । पूर्ववदन्यत् । अन्यत् शेषं लक्षणं पूर्ववत् वैतालीयवदित्यर्थः । इदमप्यर्धम् । एतदपि द्विरावृत्य पद्यं कर्तव्यम् । तद्यथा,—

मात्रा ६ भ० गु० गु० मात्रा ८ भ० गु० गु०

**श्रीमान् स पराक्रमबाहुर्भास्वद्वर्णो बुद्धिमतां यम् ।**

मात्रा ६ भ० गु० गु० मात्रा ८ भ० गु० गु०

**गुणनिवहा यस्य मुनीनामपि वाग्विषयं नैव वहन्ति ॥ ३६ ॥**

तृतीयमात्राश्रितद्वितीयमात्रं वैतालीयवृत्तमेव दक्षिणान्तिका भवतीति दर्शयन्नाह तृतीययुगिति । दक्षिणान्तिका इयं दक्षिणान्तिका स्यात् । अस्या लक्षणमाह । समस्तपादेषु चतुर्षु चरणेषु द्वितीयलः द्वितीयो लघुः तृतीययुग् स्यात् तृतीयेन लघुना एकीभूय गुरुरूपेण तिष्ठतीत्यर्थः । एतत्पद्यार्धं पुनरीदृशेनार्धेन पद्यं स्यात् । तद्यथा,—

२–३ र० ल० गु० २–३ र० ल० गु०

**महीभुजां श्रेष्ठ इत्यसौ निगद्यते तैर्नीतिवेदिभिः ।**

२–३ र० ल० गु० २–३ र० ल० गु०

**श्रुतेन शीलेन संयतैस्तथैव लङ्कालोचनो नृपः ॥ ३७ ॥**

इयमुदीच्यवृत्तिर्नाम । एतस्य लक्षणमाह । अयुग्मयोः प्रथमतृतीयपादयोः

उदीच्यवृत्तिर्द्वितीयलः सक्तोऽग्रेण भवेदयुग्मयोः ॥ ३८ ॥
पूर्वेण युतोऽथ पञ्चमः प्राच्यवृत्तिरुदितैव युग्मयोः ॥ ३९ ॥
यदा समावोजयुग्मकौ पूर्वयोर्भवति तत् प्रवृत्तकम् ॥ ४० ॥
अस्य युग्मरचिताऽपरान्तिका ॥ ४१ ॥

---

द्वितीयलः द्वितीयो लघुः अग्रेण अभिमुखस्थेन तृतीयेन लघुना सक्तो भवेत् सक्तः स्यात् । इदमप्येकमर्धम् । पुनरेवंभूतेनार्धेन श्लोकः कार्यः । तद्यथा,—

२–३  र० ल० गु०  मात्रा ८  र० ल० गु०

गुणाः प्रकुर्वन्ति दूततां जगतिपराक्रमबाहुभूपतेः ।

२–३  र० ल० गु०  मात्रा ८  र० ल० गु०

कथं समायान्ति तन्नचेन्नानाद्वीपनिवासिनो जनाः ॥ ३८ ॥

अथ अनन्तरं प्राच्यवृत्तिरुदिता नाम्ना प्राच्यवृत्तिः कथिता । कविभिरिति शेषः । अस्य लक्षणमाह । युग्मयोरेव द्वितीयचतुर्थयोः पादयोः पञ्चमो लघुः पूर्वेण चतुर्थेन लघुना युतः युक्तः स्यात् । इदमप्यर्धम् । तद्यथा,—

मात्रा ६  र० ल० गु०  ४–५  र० ल० गु०

अपथं न किमेषणं पुरा श्रीपराक्रमभुजो महीपतिः ।

मात्रा ६  र० ल० गु०  ४–५  र० ल० गु०

ध्यात्वैवं तेऽथ याचका विस्मृतान्नवदतीति चाब्रुवन् ॥ ३९ ॥

यदा पूर्वयोः उदीच्यवृत्तिप्राच्यवृत्त्योः । ओजयुग्मकौ विषमसमपादौ समौ सदृशौ स्यातामिति शेषः । तत् तदा प्रवृत्तकं भवति प्रवृत्तकं नाम स्यात् । अस्याः प्रथमतृतीयपादौ उदीच्यवृत्तेः प्रथमतृतीयपादाभ्यां समौ द्वितीयचतुर्थपादौ प्राच्यवृत्तेर्द्वितीयचतुर्थपादाभ्यां समावित्यर्थः । तद्यथा,—

२।३  र० ल० गु०  ४।५  र० ल० गु०

ब्रवीति यः सर्वदिग्गतान् सत्पराक्रमभुजस्य सद्गुणान् ।

२।३  र० ल० गु०  ४।५  र० ल० गु०

स कम्बुनाऽम्बूदधेः सुधीः सर्वमत्र परिमातुमीश्वरः ॥ ४० ॥

अस्य प्रवृत्तकस्य युग्मरचिता युग्मपादेन समपादेन कृता अपरान्तिका नाम । अयमेकः पादः । सदृशैस्त्रिभिः पादैः पद्यं भवति । तद्यथा,—

अयुग्भवा चारुहासिनी ॥ ४२ ॥

इति वैतालीयप्रकरणम् ॥

---

वक्त्रं नाद्यन्तसौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम् ॥ ४३ ॥

४।५ र० ल० गु० ४।५ र० ल० गु०

श्रीपराक्रमभुजस्य भूभुजः स्वःपतेश्च भविताऽत्र को गुरुः ।

४।५ र० ल० गु० ४।५ र० ल० गु०

वेधसेति तुलितौ च तौ तयोर्गोत्रभिल्लघुतयोर्ध्वमाययौ ॥ ४१ ॥

इहापि अस्येति सम्बन्धः । अस्य प्रवृत्तकस्य अयुग्भवा विषमपादेन जाता चारुहासिनी नाम स्यात् । अयमप्येकः पादः । एतच्चतुरावृत्त्य श्लोकः कर्त्तव्यः । दक्षिणान्तिकादयश्चतस्रो वैतालीयसदृशाः । विशेषस्तु यतिरेव । तद्यथा,—

२।३ र० ल० गु० २।३ र० ल० गु०

त्रिसिंहलाधीश्वरे धरां प्रशासति प्रीतिशालिनि ।

२।३ र० ल० गु० २।३ र० ल० गु०

विमार्गगामित्वमच्युतेः प्रजासु नासीत्सतीषु वै ॥ ४२ ॥

इति वैतालीयप्रकरणम् ॥

---

अधुना वक्त्रादिलक्ष्यलक्षणं वक्तुमुपक्रमते । अनुष्टुभीति निर्द्धारणे सप्तमी । अनुष्टुभि अनुष्टुप्मध्ये । वक्त्रं ख्यातं वक्त्रमिति नाम्ना प्रसिद्धम् । अस्य लक्षणमाह । आद्यात्प्रथमाक्षरात्परौ नसौ नगणसगणौ न स्याताम् न भवेताम् । अब्धेरिति दिग्योगलक्षणे पञ्चमीऽयम् । तेन अब्धेश्चतुर्भ्योऽक्षरेभ्यः परतः यः यगणः स्यात् । इदमप्यर्धम् । एतद्द्विरावृत्त्य पद्यं कर्तव्यम् । एवमन्यत्रापि । तद्यथा,—

ल०१ भ० य० गु० गु० म० य० गु०

पराक्रमभुजो राजा शास्त्राम्भोधेर्गतः पारम् ।

गु०१ र० य० गु० गु०१ य० य० गु०

गच्छन्तु तत्सकाशं भो ! श्रोतुं धर्मकथां लोकाः ॥ ४३ ॥

पथ्यावक्त्रं प्रकीर्तितम् एतत् पथ्यावक्त्रमिति नाम्ना कथितम् । विद्वद्भिरिति शेषः ।

**युजोर्जेन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्तितम् ॥ ४४ ॥**
*** अयुजोर्जेन वारिधेस्तदेव विपरीतादि ॥ ४५ ॥**
**चपलावक्त्रमयुजोर्नकारश्चेत् पयोराशेः ॥ ४६ ॥**

---

एतस्य लक्षणमाह । युजोः युक्पादयोः सरिद्भर्तुः समुद्रात् चतुर्भ्योऽक्षरेभ्यः परेण जेन जगणेन सहितं लक्षितं वा स्यात् । तद्यथा,—

ल०१ भ० य० गु० गु०१ भ० ज० गु०

**पराक्रमभुजो भूपः सर्वायुधविशारदः ।**

ल०१ य० य० गु० गु०१ म० ज० गु०

**मतिमान्नीतिमान् वाग्मी लक्ष्मीवान् पुण्यलक्षणः ॥ ४४ ॥**

विपरीतशब्द आदिर्यस्य तद्विपरीतादि । तदेव पथ्यावक्त्रम् । अयुजोः अयुक्पादयोः वारिधेः समुद्रात् परेण जेन जगणेन सहितं विपरीतपथ्यावक्त्रं नाम स्यात् । तद्यथा,—

गु०१ त० ज० गु०ल०१ भ० य० गु०

**इन्द्रः पालयितुं दिवं पराक्रमभुजो भूमिम् ।**

गु० र० ज० गु० गु० म० य० गु०

**जागर्ति तेन दानवा दुष्टाश्चानेन दम्यन्ते ॥ ४५ ॥**

अयुजोः अयुक्पादयोः पयोराशेः चतुर्भ्योऽक्षरेभ्यः नकारश्चेत् यदि नगणः स्यात् तदा चपलावक्त्रमिति नाम । तद्यथा,—

ल० य० न० गु० गु० स० य० गु०

**गुणिनः सन्ति बहवः स्वार्थपरायणाः किं तैः ।**

गु० र० न० गु० गु० म० य० गु०

**एकः पराक्रमभुजस्त्रींल्लोकान् स्वच्छ संपाति ॥ ४६ ॥**

सा युग्मविपुला मता युग्मविपुलेति सम्मता पिङ्गलेनेति शेषः । सा का? युग्मे द्वितीये चतुर्थे च पादे यस्यां सप्तमो लः लघुर्भवति । तथा चोक्तम् । "पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः । गुरु षष्ठन्तु पादानां शेषास्त्वनियमाः स्मृता" इति । तद्यथा,—

---

* ओजयोर्जेनेति पुस्तकान्तरपाठः ।

यस्यां लः सप्तमो युग्मे सा युग्मविपुला मता ॥ ४७ ॥
सैतवस्याऽखिलेष्वपि भेनाऽब्धितो भाद्विपुला ॥ ४८ ॥
इत्थमन्या रश्चतुर्थान्नोऽम्बुधेश्चेन्नविपुला ॥ ४९ ॥

---

ल०१ र० य० गु०गु०२ ज० ज०(ल०७)गु०

कलिङ्गदेशसञ्जाता भूमिपालकुलोद्भवा ।

ल०१ म० य० गु० ल०१ भ० ज०(ल०७)गु०

सुनेत्रा नाम देवी सा पराक्रमभुजं प्रसूः ॥ ४७ ॥

सैतवस्य सैतवाचार्यमते अखिलेष्वपि चतुर्ष्वपि पादेषु सप्तमो लः लघुर्भवति। विपुला सा इति योज्यम्। तद्यथा,

गु०१ त० ज० (ल०७) गु०ल०१य० ज०(ल०७)गु०

धर्माशोक नृपान्वये जयमालो महीपतिः ।

गु०१ य० ज०(ल७) गु०ल० १भ० ज०(ल७) गु०

तस्य पुत्रः प्रजाश्रिये पराक्रमभुजोऽभवत् ॥

अब्धितः समुद्रात् चतुर्भ्योऽक्षरेभ्यः परेण भेन भगणेन भाद्विपुला भकारात्परा विपुला भविपुला नाम स्यात्। तद्यथा,—

ल०१ त० भ० गु० ल०१ भ० भ० गु०

विषादी कपालकरः सदा रोगान्न त्यजति ।

गु० र० भ० गु० ल० भ० भ० गु०

शम्भूपमः शत्रुगणः पराक्रमबाहुपतेः ॥ ४८ ॥

चतुर्थात् वर्णात् परेण भगणेन यथा भविपुलाऽभूत् इत्थमनेन प्रकारेण चतुर्थात् परो रः रगणश्चेत्। तदा अन्या रविपुला नाम स्यात्। तद्यथा,—

गु०१ य० र० गु० गु० भ० र० गु०

नास्ति वक्तुं यन्न वेत्सि देहीति च याचके यम् ॥

गु०१ म० र० गु० ल०१ भ० र० गु०

सर्वज्ञोऽसि त्वं न तस्मात् पराक्रमबाहुदेव ! ॥

अम्बुधेः चतुर्भ्यो वर्णेभ्यः परः नश्चेत् नगणश्चेत् तदा नविपुला नाम भवति। तद्यथा,—

तोऽब्धेस्तत् पूर्वान्या भवेत् ॥ ५० ॥

*इत्यनुष्टुप्प्रकरणम्।

---

द्विकगुणितवसुलघुरचलधृतिरिह ॥ ५१ ॥

ल०१ य० न० गु०ल० म० न० गु०

उपकाराय विदुषामसाधूनामपकृते।

गु० र० न० गु० ल० य० न० गु०

जीयात्पराक्रमभुजो नरनाथो निरुपमः ॥ ४९ ॥

अब्धेः चतुर्भ्यो वर्णेभ्यः परः तः तगणश्चेत्। तदा तत्पूर्वान्या भवेत्। सः तकारः पूर्वो यस्याः सा तत्पूर्वा तविपुला नाम स्यात्। तद्यथा,—

ल०१ भ० त० गु०ल०१ ज० त० गु०

पराक्रमबाहो प्रभो प्रबिभर्ति ते सर्वदा।

गु०१ स० त० गु० गु०१ ज० त० गु०

कीर्तिलतेऽयं प्राणिनां क्लेशहानये सत्फलम् ॥ ५० ॥

इत्यनुष्टुप्प्रकरणम् ॥

---

साम्प्रतं षोडशमात्रादिलक्ष्यलक्षणमुपन्यस्यते। द्वे परिमाणे अस्येति द्विकम्। द्विर्यथा स्यात् तथा गुणिताः वसुलघवः अष्टौ लघुवर्णाः यस्याः सा तथोक्तेति क्रियाविशेषणेनापि गमकत्वात्समासः। षोडशलघुकेत्यर्थः। अचलधृतिरिति नाम्ना अचलधृतिः स्यात्। तद्यथा,—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६

इ ह भ व ति भ व ति म ह ति ध र णि भृ ति

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६

वृ जि न नि क र नु जि ध न द स म ध नि नि।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६

सु र गु रु स दृ श गि रि सु वि श द म न सि

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६

स ति कु श ल म नु दि न मु चि त मु द य तु ॥ ५१ ॥

नवानां पूरणो नवमः। नवमो वर्णः लः लघुश्चेत् गो गुरुः अन्त्यश्चेत् तदा नाम्नः मात्रासमकं स्यात्। गान्त्य इति अस्मिन् प्रकरणे सर्वत्र वर्तते। तद्यथा,—

---

* इति वक्रप्रकरणमिति अन्यत्र पाठः।

**मात्रासमकं नवमो लगोन्त्यः ॥ ५२ ॥**

**जोन्लावथाम्बुधेर्विश्लोकः ॥ ५३ ॥**

लं० गु०
१ २।३ ४ ५ ६।७ ९ १० ११।१२ १३ १४ १५।१६
**ग म्भी र त या म्बु नि धि र्व च सा**

लं० गु०
१।२ ३।४ ५ ६ ७।८ ९ १० ११।१२ १३ १४ १५।१६
**वा च स्प ति रु ष्ण क रो म ह सा**

लं० गु०
१।२ ३।४ ५ ६ ७।८ ९ १० ११।१२ १३।१४ १५।१६
**नी त्या क वि रे ष गु रु त्वा त्स्या**

लं० गु०
१।२ ३।४ ५ ६ ७।८ ९ १० ११।१२ १३ १४ १५।१६
**न्मे रु श्च प रा क्र म बा हु नृ पः ॥ ५२ ॥**

अब्धेः चतसृभ्यो मात्राभ्यः परो जः जगणश्चेत् न्लौ नगणलघू च स्याताम् । तदा विश्लोको नाम भवति । अथशब्दोऽत्र विकल्पवचनः । अथवेत्यर्थः । उक्तं च—"विकल्पानन्तरारम्भप्रश्नादौ मङ्गलेप्यथे"ति । तद्यथा,—

ज० गु०
१।२ ३।४ ५ ६।७ ८ ९।१० ११।१२ १३ १४ १५।१६
**ये ना भ व त्कृ ता र्था पृ थि वी**

ज० गु०
१ २ ३।४ ५ ६।७ ८ ९ १० ११।१२ १३।१४ १५।१६
**पि त रौ च ये न कृ त कृ त्यौ तौ**

न० लं० गु०
१।२ २ ४ ५ ६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६
**ये न च क वि नि व हाः सु खि नः स्युः**

ज० गु०
१।२ ३।४ ५ ६।७ ८ ९ १० ११।१२ १३ १४ १५।१६
**स श्री प रा क्र म भु जो ज य तात् ॥ ५३ ॥**

तस्याऽम्बुधेर्युगलं तद्युगलम् । तद्युगलात् अम्बुधिद्वितयात् अष्टाभ्यो मात्राभ्यः परो जगणश्चेत् । अथवा नगणलघू वा यदि भवेताम् । तदा नाम्ना वानवासिका स्यात् । तद्यथा,—

तद्युगलाद्वानवासिका स्यात् ॥ ५४ ॥

बाणाष्टनवसु यदि लश्चित्रा ॥ ५५ ॥

जं० गु०

१।२ ३ ४ ५।६ ७।८ ९ १०।११ १२ १३।१४ १५।१६

व्या ल कु ला न्ते प्र या ति ख ड्गो

जं० गु०

१।२ ३ ४ ५।६ ७।८ ९ १०।११ १२ १३।१४ १५।१६

मु ष्टि बि ला न्नि र्ग तो ब हि स्तात् ।

गु०

१।२ ३ ४ ५।६ ७ ८ ९ १० ११ १२ १३।१४ १५।१६

वी र स मी रा त् स मि ति स म तुं

गु०

१।२ ३ ४ ५।६ ७।८ ९ १०।११ १२ १३ १४ १५।१६

प्रो क्त ध रा वान्* प रा क्र म भु जः ॥ ५४ ॥

बाणः पञ्च । बाणश्च अष्टौ च नव च बाणाष्टनव । तेषु पञ्चमाष्टनवसु स्थानेषु यदि लः लघुः स्यात् । तदा चित्रा नाम भवति । तद्यथा,—

लं० लं० लं० गु०

१।२ ३।४ ५ ६ ७ ८ ९ १० ११।१२ १३।१४ १५।१६

रा मा ज न म न सि म नो भू यः

लं० लं० लं० गु०

१।२ ३।४ ५ ६।७ ८ ९ १० ११।१२ १३।१४ १५।१६

वै व स्व तो भ व ति सं ग्रा मे ।

लं० लं० लं० गु०

१।२ ३ ४ ५ ६।७ ८ ९ १० ११।१२ १३।१४ १५।१६

या च क ज ने त्रि द श शा खी स्या

लं० लं० लं० गु०

१।२ ३।४ ५ ६।७ ८ ९ १० ११।१२ १३ १४ १५।१६

त्वै कः प रा क्र म भु ज! त्व म तः ॥ ५५ ॥

---

* पराक्रमबाहुरिति पुस्तकान्तरपाठः ।

* अब्धियुगाद्भश्चेदुपचित्रा ॥ ५६ ॥
यदतीतकृतविविधलक्ष्मयुतैर्मात्रासमादिपादैः कलितम् ।
अनियतवृत्तपरिमाणसहितं प्रथितं जगत्सु पादाकुलकम् ॥५७॥

अब्धियुगात्समुद्रद्वयात् अष्टाभ्यो मात्राभ्यः परो भश्चेत् यदि भगणः स्यात् । तदा उपचित्रा नाम स्यात् । तद्यथा,—

भ० गु०
१।२ ३ ४ ५।६ ७।८ ९।१० ११ १२ १३।१४ १५।१६
श्री न व र ला धी श्व र ल ङ्का

भ० गु०
१।२ ३ ४ ५।६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६
ना य क! दे व! प रा क्र म बा हो! ।

भ० भ०
१।२ ३ ४ ५।६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६
मा न म त ङ्ग ज दा न वि नो द!

ल० गु०
१।२ ३ ४ ५।६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६
दी न ज ना न म दी न स ख स्त्वम् ॥ ५६ ॥

जगत्सु छन्दश्शिष्टिषु तत्पादाकुलकं नाम प्रथितं ख्यातम् । किंभूतम्? अनियतवृत्तपरिमाणसहितम् । वृत्तस्य परिमाणं वृत्तपरिमाणम् अनियतम् अनिश्चितं च तद्वृत्तपरिमाणंचेति अनियतवृत्तपरिमाणम् । तेन सहितम् । तत्किम्? यत् मात्रासमादिपादैः कलितम् मात्रासमकानां विश्लोकवानवासिकाचित्रोपचित्राणां चरणैर्निबद्धम् । तैः कीदृशैः? अतीतकृतविविधलक्ष्मयुतैः । अतीते भूते कृतम् अतीतकृतम् तच्च तद्विविधलक्ष्म नानाप्रकारलक्षणंचेति कर्मधारयः तेन युतैः संयुक्तैः । अत्र वृत्ते प्रथमः पादो मात्रासमकस्य स्याल्लघोर्नवमत्वाद्गुरोः पादान्तत्वाच्च । अथवा चित्रायाः प्रथमः पादः स्यात् पञ्चमाष्टनवमस्थानेषु लघोः स्थितत्वाद्गुरोरन्तत्वाच्च । द्वितीयः पादो विश्लोकस्य स्यात् मात्रायाश्चतुष्टयात् परतो जगणस्य सम्भवत्वाद्गुर्वन्तत्वाच्च । तृतीयः पादो वानवासिकायाः स्यात् मात्राष्टकाज्जगणस्य विद्यमानत्वादन्ते गुरुत्वाच्च । चतुर्थः पादोपि विश्लोकस्य स्यात् मात्राचतुष्टयात् परतो जगणस्य सम्भवत्वादन्ते गुरुत्वाच्च । एवं मात्रासमकादीनां पञ्चानां मध्ये यथासम्भवं चतुर्भिस्त्रिभिर्द्वाभ्यां वा पादाभ्यां मिश्रितं वृत्तं पादाकुलकमिति लोकेषु प्रसिद्धम् । तद्यथा,—

* 'उपचित्रा नवमे परयुक्ते' इति च 'अष्टाभ्यो गल्यादुपचित्रा" इति च पुस्तकान्तरपाठौ ।

वृत्तस्य ला विनावर्णैर्गावर्णा गुरुभिस्तथा ।
गुरवो लैर्दले नित्यं प्रमाणमिति निश्चितम् ॥ ५८ ॥

इति मात्रासमप्रकरणम् ॥

---

ल० ल० ल० गु०
१।२ ३।४ ५ ६ ७ ८ ९ १० ११।१२ १३ १४ १५।१६
विद्रुत्कुमु दवनविबो धवि धु-

ल० गु०
१ २ ३ ४ ५।६ ७ ८ ९ १०।११ १२ १३।१४ १५।१६
र्दशबलशासनसरो जमधुलिट् ।

ज० गु०
१।२ ३।४ ५।६।७ ८ ९।१० ११।१२ १३ १४ १५।१६
सङ्गीतशास्त्रसा हित्यगुरु-

भ० गु०
१।२ ३ ४ ५।६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६
र्भातिपराक्रम बाहुमहीन्द्रः ॥ ५७ ॥

वृत्तस्य पथ्यार्यादेः लाः लघवः मात्राः वर्णैर्विना अक्षराणि त्यक्त्वा गा इति गुरव इति प्रमाणम् नित्यमनवरतम् निश्चितं निर्णीतम् । त एव लाः गुरुभिर्विना गुरूणि त्यक्त्वा वर्णा इति अक्षराणीति प्रमाणं निश्चितम् । तथा तद्वत् त एव लाः लैर्विना लघूनि त्यक्त्वा दले अर्धे कृते गुरव इति गुरूणीति प्रमाणं निश्चितम् । आर्यापथ्यार्ययोर्मात्राः सप्तपञ्चाशद्भवन्ति । एवं विपुलाचपलात्रयाणाम् । गीतेः षष्टिमात्राः उपगीतेश्चतुःपञ्चाशत् आर्यागीतेश्चतुःषष्टिः । अथ कदाचित् कश्चित्पथ्याचरणद्वयं भवेत् । तत्राक्षराण्येतावन्ति तत्र गुरवस्तु कतीति यद्यपृच्छत् । तेनैवोक्तान्यक्षराणि यावन्ति तावतीष्वेव मात्रासु पथ्यायाः सप्तपञ्चाशतो मात्राभ्यस्तावतीषु सतीष्ववशिष्टा मात्रा यावन्त्यो भवन्ति तावन्त्य एव गुरव इति वक्तव्याः । अथ गुरव इयन्त्यः कतिवर्णा इति पृष्टवान् । तदा तेनोक्ता एव यावन्तस्तावतीष्वेव मात्रासु सप्तपञ्चाशतो मात्राभ्यः अपनीतासु परिशिष्टमात्रासङ्ख्यायाः वर्णा वाच्याः । अथवा लघव एतावन्तः कियन्तो गुरव इति यः पृच्छतिस्म । तदा तेनोक्तलघुसङ्ख्यायाः मात्रासु सप्तपञ्चाशतो मात्राभ्यः अपनीतास्ववशिष्टमात्रास्वर्धीकृतासु च ततः परिशिष्टमात्रासङ्ख्यायाः गुरवो वाच्याः । एवं गीतादिष्वपि यथासम्भवं बोद्धव्यम् ॥

इति षोडशमात्रासमप्रकरणम् ॥ ५८ ॥

शिखिगुणितदशलघुरचितमपगतलघुयुगलमपरमिदमखिलम् ।
सगुरु शकलयुगलकमपिसुपरिघटितललितपदविततिभवतिशिखा५९

विनिमयविहितशकलयुगललघु *
ललितपदविततिरचितगुणनिचया ।
श्रुतिसुखकृदियमपि जगति
जि जशिर उपगतवतिसति भवति खजा ॥ ६० ॥

इदानीं शिखादिलक्ष्यलक्षणमालक्ष्यते । भवति शिखा इयं शिखेति नाम स्यात् । अस्य लक्षणमाह । इदं प्रथमचरणम् । शिखिगुणितदशलघुरचितम् । दश च ते लघवश्चेति दशलघवः शिखिभिस्त्रिभिर्गुणिताः शिखिगुणिताः शिखिगुणिताश्च ते दश लघवश्चेति कर्मधारयः तैः रचितम् । किंविशिष्टम्? अपगतलघुयुगलम् अपगतं निर्गतं लघुयुगलं लघुद्वयं यस्मात् तत् तथोक्तम् । अपरं शिखायाः द्वितीयचरणम् अखिलं समस्तं प्रथमचरणं च लघुद्वयवर्जितं भवतीत्यर्थः । शकलयुगलकमपि सगुरु गुरुसहितम् । शिखाया अयुक् चरणे अष्टाविंशतिर्लघवः अन्ते गुरुरेकश्च । युक्चरणे त्रिंशल्लघवः अन्ते गुरुरेकश्चेति विज्ञेयम् । किंविशिष्टम्? सुपरिघटितललितपदवितति सुपरिघटिता सम्यग्रचिता ललिता मनोहरा पदविततिः पदानां पङ्क्तिर्यत्र शकलयुगल इति विग्रहः कार्यः । इदमर्धम् । एतद्द्विरावृत्य श्लोकः कर्त्तव्यः । तद्यथा,—

ल० २८, गु० १

असुर सुरनर मुनिवर फणिपतिकृतनति जिनचरणसर सिरुहं

ल० ३०, गु० १

प्रतिदिन यजनजनित सुकृतनिहत दुरितनिकरममृत मधुरवचनम् ।
कुसुमपुरनगरवरविरचितपदमपगतभवभयचयमलिनं
जयिनमवनिपतिमिममवतु हरिरिह नरकछिदुरगरिपुकृतगमनः ॥ ५९ ॥

जस्य शिरः जशिरः । खजेत्यत्र जकारस्य मूर्धम् जि जकारे उपगतवति सति खजा भवति नाम्ना खजेति स्यात् । अपिशब्दोऽत्र समुच्चये । जगति लोके न केवलं शिखा श्रुतिसुखकृत् श्रवणसुखकारिणी इयं खजापि श्रुतिसुखकृद्भवति । इयं कीदृशी? विनिमयविहितशकलयुगललघुललितपदविततिविरचितगुणनिचया शकलयोः पादयोर्युगलं शकलयुगलम् । शकलयुगलस्य लघवः शकलयुगललघवः । विनिमयेन विपर्यासेन परिवर्त्तन विहिता रचिताः शकलयुगललघवो यस्यां पदवितत्यां सा विनिमयविहितशकलयुगललघुः । विततिः परम्परा पदानां विततिः पदविततिः । ललिता

* कलितेति क्वचित् ।

**अष्टावर्धे गाद्व्यभ्यस्ता यस्याः साऽनङ्गक्रीडोक्ता ॥ ६१ ॥**

**दलमपरमपि वसुगुणितसलिलनिधिलघुकविरचितपदविततिभवति।**
**त्रिगुणनवलघुरवसितिगुरुरिति दलयुगकृततनुरतिरुचिरा ॥ ६२॥**

**इति द्विपात्प्रकरणम्।**

---

मनोज्ञा चासौ पदविततिश्चेति कर्मधारयः। विनिमयविहितशकलयुगललघुश्चासौ ललितपदविततिश्चेति पुनः कर्मधारयः। गणस्य निचयः समूहो गणनिचयः विनिमयविहितशकलयुगललघुललितपदवितत्या रचितः कृतो गणनिचयो यस्यां सा तथोक्ता। शिखायाः समचरणं विषमं विषमं च समं कृत्वा विहितेत्यर्थः। शिखाखञ्जे दण्डकभेदौ। अत्र तु दर्शितं मात्रासमकप्रस्तावात्। इदमप्यर्धमिति ज्ञेयम्। पुनरीदृशेनार्धेन पद्यं स्यात्। तद्यथा,—

ल० ३०　　　　　　　　गु० १

**समरशिर सिसमुपगतगजसमजतरल तरतुरगगण तनुमथन!**

ल० २८　　　　　　　　गु० १

**समखशयनमरिनृपति जनहृदयभुवि दधति तवविषमविशिखः।**
**भयचकितनिजयुवतितनयपरिजनगुरुषु गदित वचनकृततमसि**
**क्षितिपतितिलक! सकलनरनयनकुमुदशिशिरकिरण! मगधपते! ॥ ६० ॥**

साऽनङ्गक्रीडोक्ता अनङ्गक्रीडेत्यभिहिता। सा का? यस्याः अर्धे पादद्वये अष्टौ गाः अष्टौ गुरवः द्व्यभ्यस्ताः द्विगुणिताः षोडशगुरुका इत्यर्थः। इदमप्यर्धम्। पुनरीदृशेनार्धेन पद्यं भवति। तद्यथा,—

गु० १६

**गर्जद्वैरिव्यूह ध्वंसी† त्रासादूहिर्हिर्ज्ञातोगर्व्वः।**
**लङ्कालङ्कारोऽयं राजा लब्धः पूर्णैः सङ्ख्यावद्भिः ॥ ६१ ॥**

इयम् अतिरुचिरा नाम स्यात्। अस्याः दलं वसुगुणितसलिलनिधि लघुकविरचितपदविततिभवति। लघव एव लघुकाः। "यावादिभ्यः कनि"ति स्वार्थे कन्प्रत्ययः। सलिलनिधयश्च ते लघुकाश्चेति कर्मधारयः। वसुभिरष्टभिर्गुणिताः वसुगुणिताः। तेच ते सलिलनिधिलघुकाश्चेति पुनः कर्मधारयः। तैर्विरचिता पदविततिः पदानां पङ्क्तिर्यस्मिन् तत् तथोक्तम्। कर्मधारयगर्भो बहुव्रीहिः। दलमिति। एषा किंविशिष्टा? त्रिगुणा नवलघुः त्रयोगुणाः येषां ते त्रिगुणाः। त्रिभिर्गुणिताः नवलघवो नवसङ्ख्याका लघुवर्णाः

---

† त्रसादूहिहि ज्ञाता गर्वः क्वचित्।

इति वृत्तरत्नाकराख्ये छन्दसि सममात्राख्यो
द्वितीयोऽध्यायः।

---

## १ उक्तायाम् २
## ग् श्रीः ॥ १ ॥

---

यस्यामिति बहुव्रीहिः। पुनः किंभूता? अवसितिगुरुः अवसितौ अवसाने गुरुर्यस्याः सा तथोक्ता। पुनः कीदृशी? दलयुगकृततनुः दलयुगेन पूर्वापरार्धाभ्यां कृता रचिता तनुः वर्णद्वयशरीरं यस्याः सा तथोक्ता। इदमर्धं दलम्। अपरमर्धमपि ईदृशं स्यात्। भावश्चाऽयम्। अस्याः अतिरुचिरायाः प्रथमतृतीययोः पादयोर्द्वात्रिंशल्लघवः। द्वितीयचतुर्थयोः पादयोः सप्तविंशतिर्लघवः अन्ते गुरुरेकश्चेति। तद्यथा,—

( ल० ३२ )

**नवनलिननिभनयन! शरदुडुपतिसदृशवदन! सदरुणदसनवसन!**

( ल० २७ ) ( गु० १ )

**प्रबलकलिमलिगहनदहन! भुजबलविजितनिखिलभुवनपते।**

**विशदगुणगणकलितकमलबलवदधिपमुख! विबुधसख! मुदितहृदय!**

**त्रिदशहित! चतुरुदधिवलयितधरणिधव! जय जय नृपतिगुरो! ॥ ६२ ॥**

**इति द्विपात्प्रकरणम् ॥**

इति श्रीशाक्यमुनेर्भगवतः सर्वज्ञस्य परमोपासकेन गौडदेशवास्तव्येन श्रीबौद्धागमचक्रवर्त्तिना भूसुरेणाऽचार्येण विरचितायां वृत्तरत्नाकरपञ्चिकायां मात्रावृत्तलक्ष्यलक्षणविभागप्रतिपादनो नाम द्वितीयोऽध्यायः॥

---

अथेऽदानीं तेषामेवोक्तात्युक्तादीनामुक्तानां छन्दसां क्रमेण लक्ष्यलक्षणे दर्शयन्नाह उक्तेत्यादि। उक्तायाम् उक्तानामच्छन्दसि उदाहरतीति शेषः। ग् इति एकस्मिन् पादे एक एव गुरुश्चेत्। तदा श्रीर्नाम वृत्तं स्यात्। अस्योदाहरणम्.—

**श्री स्त्वाम्। सा ऽव्यात् ॥ १ ॥**

---

गश्च गश्च गौ। "सरूपाणामेकशेष एकविभक्तावि"त्येकशेषः। गौ गुरुद्वयं चेत्। तदा स्त्रीनाम स्यात्। तद्यथा,—

२ अत्युक्तायाम् ४
गौ स्त्री ॥ २ ॥

---

३ मध्यायाम् ८
मो नारी ॥ ३ ॥
रो मृगी ॥ ४ ॥
*य केसा ॥ ५ ॥

---

४ प्रतिष्ठायाम् १६
म्गौ चेत् कन्या ॥ ६ ॥

---

वाणी विद्याम्। तुभ्यं दद्यात् ॥ २ ॥

---

मः मगणश्चेत्। तदा नारी नाम स्यात्। तद्यथा—

मगणः१ मगणः१ मगणः१ मगणः१

सर्वज्ञो देवानाम्। मर्त्यानां शास्ता स्यात् ॥ ३ ॥

रः रगणश्चेत्। तदा मृगीनाम स्यात्। तद्यथा,—

रगणः१ रगणः१ रगणः१ रगणः१

श्रीघनः सन्ततम्। मन्मने वर्तताम् ॥ ४ ॥

येत्यत्र छन्दस्त्वाद्विभक्तिलोपः। यः यगणश्चेत्। तदा केसा नाम स्यात्। तद्यथा,—

यगणः १ यगणः१ यगणः१ यगणः १

मुनीन्द्र त्वदङ्घ्रिम्। नमामो ऽनुकालम् ॥ ५ ॥

---

प्रतिष्ठायामुदाहरति। म् च गश्च म्गौ। मगणगुरू चेत् तदा कन्या नाम स्यात्। तद्यथा,—

मगणः गु० मगणः गु० मगणः गु० मगणः गु०

बुद्धं रत्नं धर्मं रत्नम्। सङ्घं रत्नं नित्यं वन्दे ॥ ६ ॥

यश्च गश्च यगौ। यगणगुरू चेत् तदा व्रीडा नाम स्यात् तद्यथा,—

---

* एतत् सूत्रं केषुचित्पुस्तकेषु नास्ति ॥

*यगौ व्रीड़ा ॥ ७ ॥
ज्ग लासिनी ॥ ८ ॥
भ्गौ सुमुखी ॥ ९ ॥
सुमतिः स्गौ ॥ १० ॥
गौं समृद्धिः ॥ ११ ॥

---

यगणः गु० यगणः गु० यगणः गु० यगणः गु०

**अयं बुद्धो दयाब्धिस्ते । सदा भक्तेः शुभं दद्यात् ॥ ७ ॥**

ज् च गश्च ज्गेति द्वन्द्वः । विभक्तिलोपः छन्दस्त्वात् । ज्ग जगणगुरू चेत् तदा लासिनी नाम स्यात् । तद्यथा,—

जगणः गु० जगणः गु० जगणः गु० जगणः गु०

**तथागतो भवत्रयम् । निहन्ति ते न संशयः ॥ ८ ॥**

भ् च गश्च भ्गौ । भगणगुरू चेत् तदा सुमुखी नाम स्यात् । तद्यथा,—

भगणः गु० भगणः गु० भगणः गु० भगणः गु०

**लोक गुरुं बुद्धमहम् । दुःखनुदे नौमि सदा ॥ ९ ॥**

स् च गश्च स्गौ । सगणगुरू चेत् तदा सुमतिर्नाम स्यात् । तद्यथा,—

सगणः गु० सगणः गु० सगणः गु० सगणः गु०

**मनसाऽहं वचसाऽहम् । वपुषाऽहं जिनमिच्छे ॥ १० ॥**

र् च गश्च गौं । रगणगुरू चेत् तदा समृद्धिर्नाम स्यात् । तद्यथा,—

रगणः गु० रगणः गु० रगणः गु० रगणः गु०

**ज्ञानसिन्धुं दीनबन्धुम् । पूजयेऽहं शाक्यसिंहम् ॥ ११ ॥**

---

सुप्रतिष्ठायामुदाहरति । भ् च गश्च भ्गौ ग् गुरुः । भगणगुरुद्वयं चेत् तदा इति इयम् पङ्क्तिर्नाम स्यात् । तद्यथा,—

---

* एतानि सूत्राणि केषुचित्तद्वृत्तरत्नाकरेषु नागतानि ।

## ५ सुप्रतिष्ठायाम् ३२

भ्गौगिति पङ्क्तिः ॥ १ ॥

गौंगिति प्रीतिः ॥ २ ॥

सती जगौ गः ॥ ३ ॥

मन्दा तलगैः ॥ ४ ॥

---

## ६ गायत्र्याम् ६४

*त्यौ स्त स्तनुमध्या ॥ १ ॥

भगणःगु०गु० भगणःगु०गु० भगणः गु०गु० भगणः गु०गु०

हाटकवर्णः सद्गुणपूर्णः । एष मुनीन्द्रः पातु भवन्तम् ॥ १ ॥

र् च गश्च गौ ग् गुरुः । रगणगुरुद्वयं चेत् तदा इति इयं प्रीतिर्नाम स्यात् । तद्यथा,—

रगणः गु०गु० रगणः गु०गु० रगणः गु०गु० रगणः गु० गु०

भेजिरे बुद्धं ये जनाः सिद्धम् । सर्वथा तेषां दुर्गति र्नाऽसीत् ॥ २ ॥

जश्च गश्च जगौ । गः गुरुः । जगणगुरुद्वयं चेत् तदा सती नाम स्यात् । तद्यथा,—

जगणःगु०गु० जगणः गु०गु० जगणः गु०गु० जगणः गु०गु०

अघौघहर्त्रे समस्तशास्त्रे । जनाय गोप्त्रे नमोस्तु तस्मै ॥ ३ ॥

तश्च लश्च गश्च तलगाः । तैः तगणलघुगुरुभिर्मन्दा नाम स्यात् । तद्यथा,—

तगणःल०गु० तगणः ल०गु० तगणः ल०गु० तगणः ल०गु०

बुद्धं शरणं ये ये न गताः । ते ते कुधियो मन्दा नियतम् ॥ ४ ॥

---

गायत्र्यामुदाहरति । त् च यश्च त्यौ तगण–यगणौ स्तः भवतश्चेत् तदा तनुमध्या नाम स्यात् । तद्यथा,—

तगणः यगणः तगणः यगणः तगणः यगणः तगणः यगणः

अङ्गीकृतनन्दं शुद्धोदन नन्दम् । वृन्दारकवन्द्यं वन्दे मुनिचन्द्रम् ॥ १ ॥

न् च यश्च न्यौ । नगणयगणौ यदि स्तः तदा शशिवदना नाम स्यात् । तद्यथा,—

---

* त्यौ चेत्तनुमध्येति पुस्तकान्तरपाठः ।

**शशिवदना न्यौ ॥ २ ॥**

**मौ सावित्रीमाहुः ॥ ३ ॥**

**म्रौ यस्याः सा नदी ॥ ४ ॥**

**म्सौ प्रोक्तं मुकुलम् ॥ ५ ॥**

**मालिनीर्माभ्यां स्यात् ॥ ६ ॥**

**सयुगं रमणी ॥ ७ ॥**

---

नगणः यगणः नगणः यगणः नगणः यगणः नगणः यगणः

**विजयिनि बुद्धे मनसिजयुद्धे । कुसुममवर्षन् सुरजनसङ्घाः ॥ २ ॥**

मश्च मश्च मौ । मगणद्वयं चेत् तदा सावित्रीमाहुः नाम्ना सावित्रीति ब्रुवते आचार्या इति शेषः । तद्यथा,—

मगणः मगणः मगणः मगणः मगणः मगणः मगणः मगणः

**बुद्धे धर्मे सङ्घे येषां गाढा भक्तिः । हस्ते तेषां मुक्ति र्भुक्तिः पादाधः स्यात् ॥३॥**

म् च रश्च म्रौ । यस्याः मगणरगणौ स्याताम् । सा नदी नाम स्यात् । तद्यथा,—

मगणः रगणः मगणः रगणः मगणः रगणः मगणः रगणः

**ते शूरास्ते बुधास्ते स्युर्धन्या जनाः । ये सर्वज्ञं सदा बुद्धं भक्त्या नताः ॥ ४ ॥**

म् च सश्च म्सौ । मगणसगणौ चेत् तदा मुकुलं प्रोक्तं मुकुलमिति नाम्ना कथितम् । तद्यथा,—

मगणः सगणः मगणः सगणः मगणः सगणः मगणः सगणः

**सा जिह्वा सुगतं या स्तौति प्रथितम् । तच्चित्तं सततं सद्धर्मप्रयतम् ॥ ५ ॥**

र् च मश्च र्मौ रगणमगणौ । ताभ्यां मालिनी नाम स्यात् । तद्यथा,—

रगणः मगणः रगणः मगणः रगणः मगणः रगणः मगणः

**मा मनो मुञ्चाऽमुं सर्वथा सर्वज्ञम् । त्वामयं दुःखाब्धेर्मोक्ष्यति प्रेम्णैव ॥ ६ ॥**

सस्य युगं सयुगम् । सगणद्वयं चेत् । तदा रमणी नाम स्यात् । तद्यथा,

सगणः सगणः सगणः सगणः सगणः सगणः सगणः सगणः

**स गुणी स धनी सकुली सबली । स कृती भुवि यः सुगतार्चनकृत् ॥ ७ ॥**

त्सौ चेद्वसुमती ॥ ८ ॥

---

७ उष्णिहि १२८

म्सौ गः स्यान्मदलेखा ॥ १ ॥

कुमारललिता ज्सौग् ॥ २ ॥

मधुमती नभगाः ॥ ३ ॥

सरगाः हंसमाला ॥ ४ ॥

---

त् च सश्च त्सौ । तगणसगणौ चेत् तदा वसुमती नाम स्यात् । तद्यथा,—

तगणः सगणः तगणः सगणः तगणः सगणः तगणः सगणः

**ज्ञानेन सगुणे रूपेण कृपया । सर्वज्ञसदृशः कोपीह न पुमान् ॥ ८ ॥**

---

उष्णिह्युदाहरति । म् च सश्च म्सौ गः गुरुः । मगणसगणौ गुरुरेकश्चेत् तदा मदलेखा नाम स्यात् । तद्यथा,—

मगणः सगणः गु० मगणः सगणः गु० मगणः सगणः गु० मगणः सगणः गु०

**सद्धर्मश्रवणं मे धर्मे धीः सततं स्यात् । धर्म्यं कर्म च भूयाच्छास्ता मेस्तु स एव ॥१॥**

ज् च सश्च ज्सौ ग् गुरुः । जगणसगणौ गुरुरेकश्चेत् । तदा कुमारललिता नाम स्यात् । तद्यथा,—

जगणः सगणः गु० जगणः सगणःगु० जगणः सगणः गु० जगणः सगणः गु०

**स योजयति शास्ता पिनोमदनगर्वम् । सदास्तु तव शास्ता सराहुलयतीन्द्रः ॥ २ ॥**

नश्च भश्च गश्च नभगाः नगणभगणौ गुरुरेकश्चेत् । तदा मधुमती नाम स्यात् । तद्यथा,—

नगणः भगणः गु० नगणः भगणःगु० नगणः भगणः गु० नगणः भगणः गु०

**सकलशास्त्रपटुः सततधर्ममतिः । जयति मौर्यभवो विजयबाहुमुनिः ॥ ३ ॥**

सश्च रश्च गश्च सरगाः सगणरगणौ गुरुरेकश्चेत् । तदा हंसमाला नाम स्यात् । तद्यथा,—

सगणः रगणःगु० सगणः रगणः गु० सगणः रगणः गु० सगणः रगणः गु०

**स गुरु धर्मभाजां सततप्रीतिचेताः । भुवने राहुलाख्यो मुनिरास्तां सहृन्मे ॥४॥**

---

## ८ अनुष्टुभि २५६

भौगिति चित्रपदागः ॥ १ ॥
*मो मो गो गो विद्युन्माला ॥ २ ॥
माणवकं भात्तलगाः ॥ ३ ॥
म्नौ गौ हंसरुतमेतत् ॥ ४ ॥
नागरकं भरौ लगौ ॥ ५ ॥

---

अनुष्टुभि उदाहरति । भश्च भश्च भौ ग् ग इति गुरू । भगणद्वयं गुरुद्वयं चेत्। तदा इति एषा चित्रपदा नाम स्यात् । तद्यथा,—

भगणः भगणः गु०गु० भगणः भगणः गु०गु०

राहुलनाम मुनीन्द्रः केन सखे स चकार ।
ज्ञातमिदं सहि जातो धर्मसुधारस†धारैः ॥ १ ॥

मोम इति मगणद्वयं गो ग इति गुरुद्वयं चेत् । तदा विद्युन्माला नाम स्यात्। तद्यथा,—

मगणः मगणः गु०गु० मगणः मगणः गु०गु०

विद्युन्माला यस्याः मूर्त्ते रायुः साम्यं कालं कश्चित् ।
सत्कारुण्या धारा सारा सा मौनेन्द्री युष्मानव्यात् ॥ २ ॥

तश्च लश्च गश्च तलगाः तगणलघुगुरवः । भात् भगणात्परतः तगणलघुगुरवो यदि स्युस्तदा माणवकं नाम स्यात् । तद्यथा,—

भगणः तगणः ल०गु० भगणः तगणः ल०गु० भगणः तगणः ल०गु० भगणः तगणः ल०गु०

साधुमतं बौद्धमतं दुर्मतिभि र्नानुमतम्। सत्यददं नाधिगता भास्करभोल्लूकगणैः ॥३॥

म् च नश्च म्नौ गश्च गश्च गौ मगणनगणौ गुरुद्वयञ्चेत् । तदैतत् हंसरुतं नाम स्यात् । तद्यथा,—

मगणः नगणः गु०गु० मगणः नगणःगु०गु० मगणः नगणःगु० गु० मगणः नगणःगु०गु०

यस्माद्बुद्ध सदृशोऽयं यस्माद्धर्मसदृशश्च । यस्मात्सङ्घसदृशः स्यात्तस्माद्धर्मगुरुमेनम् ४

भश्च रश्च भरौ लश्च गश्च लगौ भगणरगणौ लघुगुरू चेत् । तदा नागरकं नाम स्यात् । तद्यथा,—

---

* 'मो मो गो गो विद्युल्लेखे' ति पुस्तकान्तरपाठः । † 'सारैः' इति क्वचित् ।

नाराचिका तरौ लगौ ॥ ६ ॥
जौ समानिका गलौ च ॥ ७ ॥
प्रमाणिका जरौ लगौ ॥ ८ ॥
वितानमाभ्यां यदन्यत् ॥ ९ ॥

---

भगणः रगणः ल०गु० भगणः रगणः ल०गु०

प्राणवधं मृषावचः स्तेयसुरापरस्त्रियः ।
पञ्च सखे ! विमुञ्च तत् किञ्च कुरु स्वमङ्गलम् ॥ ५ ॥

तश्च रश्च तरौ लश्च गश्च लगौ तगणरगणौ लघुगुरू चेत् । तदा नाराचिका नाम स्यात् । तद्यथा,—

तगणः रगणः ल०गु० तगणः रगणः ल०गु०

भास्वद्विभूषणाम्बरा कर्पूरकुन्दसुन्दरी ।
सा ते सरस्वती सदा जाड्यं धियो हरत्वरम् ॥ ६ ॥

र् च जश्च जौ गश्च लश्च गलौ रगणजगणौ गुरुलघू च यदि स्याताम् । तदा समानिका नाम स्यात् । तद्यथा,—

रगणः जगणः गु०ल० रगणः जगणः गु० ल०

मञ्जुकुञ्जसङ्गतापि तारहारमण्डितापि ।
वस्तुतत्वदास्वनेन रोचते वराङ्गनेऽह ॥ ७ ॥

जश्च रश्च जरौ लश्च गश्च लगौ जगणरगणौ लघुगुरू चेत् । तदा प्रमाणिका नाम स्यात् ॥ तद्यथा,—

जगणः रगणः ल०गु० जगणः रगणः ल०गु०

मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ ।
प्रशस्तवाचकान्यमू न्ययः शुभावहो विधिः ॥ ८ ॥

आभ्यां समानिकाप्रमाणिकाभ्यां यदन्यद्वृत्तं तद्वितानं नाम स्यात् । अन्यदिति समानिकायामादौ रगणः पश्चात् जगणः ततः गुरुलघू च । प्रमाणिकायामादौ जगणः पश्चात् रगणः ततः लघुगुरू चेति क्रमव्युत्क्रमाभ्यां समानिकाप्रमाणिके निष्पन्ने । आभ्यां क्रमाभ्यां योऽन्यत्क्रमः जगणादिस्तगणमध्यः गुरुद्वयं च रगणादिः सगणमध्यः लघुद्वयं च । तद्वितानं नाम स्यादित्यर्थः । तद्यथा,

९ अथ बृहत्याम् ५१२

रान्नसाविह हलमुखी ॥ १ ॥

*भुजगशिशुभृता नौमः ॥ २ ॥

---

१० अथपङ्क्तौ १०२४

म्सौ ज्गौ शुद्धविराडिदं मतम् ॥ १ ॥

---

जगणः तगणः गु०गु० जगणः तगणः गु०गु०

यदा यदा धर्महानि र्नृणां भवेत्पापभाजाम् ।
तदा तदा दोषराशि र्विवृद्ध्य सम्मोहयेत् तान् ॥

रगणः सगणःल०ल० रगणः सगणः ल०ल०

पाहिमां पुरुषोत्तम सर्वतो जिन ! गौतम !
भक्तिरस्तु सदा त्वयि सत्कृपां कुरुतान्मयि ॥ ९ ॥

---

बृहत्यामुदाहरति । नश्च सश्च नसौ । इह रात् रगणात्परतः नगणसगणौ चेत् । तदा हलमुखी नाम स्यात् । तद्यथा,—

रगणः नगणः सगणः रगणः नगणः सगणः

बाहुलेयचरणयुगं वाञ्छितार्थदमनुकलम् ।
सिद्धयेऽत्रशुचिवचसा सञ्जपन्तु बहुजनताः ॥ १ ॥

नश्च नश्च नौ नगणद्वयं मः मगणश्चेत् । तदा भुजगशिशुभृता नाम स्यात् । तद्यथा,—

नगणः नगणः मगणः नगणः नगणः मगणः

स मुनि विजयबाहु र्वै त्रिपिटकमखिलं धत्ते ।
गुणिगणगहनस्तस्मात् सरसरसर †संसेतुम् ॥ २ ॥

---

पङ्क्तावुदाहरति । म् च सश्च म्सौ ज् च गश्च ज्गौ मगणसगणौ जगणगुरू चेत् । तदा इदं शुद्धविराड् नाम मतम् कीर्तितम् । तद्यथा,—

---

* 'भुजगशिशुभृता' 'भुजगशिशुयुता' चेति पुस्तकान्तरपाठौ । † 'संश्रेतु'मिति पुस्तकान्तरपाठः ।

म्नौ य्गौ चेति पणवनामेदम् ॥ २ ॥
जौं रगौ मयूरसारिणी स्यात् ॥ ३ ॥
भ्मौ सगयुक्तौ *रुक्मवतीयम् ॥ ४ ॥
ज्ञेया मत्ता मभसगयुक्ता ॥ ५ ॥

---

मगणः सगणः जगणः गु० मगणः सगणः जगणः गु०

मातः ! पर्वतपुत्रि ! सारदे ! त्वत्पादौ परिपूज्य भक्तितः ।
के वा नो कवयन्ति साध्वतस्त्वन्मूलं सुधियां धियःश्रियः ॥ १ ॥

म् च नश्च म्नौ य् च गश्च य्गौ मगणनगणौ यगणगुरू च । इति हेतोः इदं वृत्तं पणवनाम स्यात् । पणव इति नाम यस्य तत्पणवनामेति समासः । तद्यथा,—

मगणः नगणः यगणः गु० मगणः नगणः यगणः गु०

जानेऽहं तव हृदयं गुप्तं ही ही त्वत्कृतमिदमौत्सुक्यम् ।
शक्तिस्ते कितव ! हि सा तस्यां गच्छ त्वं मम मुखतः शीघ्रम् ॥ २ ॥

र् च जश्च जौं रश्च गश्च रगौ रगणजगणौ रगणगुरू यदि भवेताम् । तदानीं मयूरसारिणी नाम स्यात् । तद्यथा,—

रगणः जगणः रगणः गु० रगणः जगणः रगणः गु०

या कुलान्तरादुपैति रन्तुं या भुजङ्गभोगसक्तचित्ता ।
यामितं प्रयाति सन्तताया तां मयूरसारिणीन्तु विद्यात् ॥ ३ ॥

भ् च मश्च भ्मौ सश्च गश्च सगौ ताभ्यां सगणगुरुभ्यां युक्तौ भगणमगणौ यदि भवेताम् । तदानीम् इयं रुक्मवती नाम स्यात् । तद्यथा,—

भगणः मगणः सगणः गु० भगणः मगणः सगणः गु०

राहुलनामा कोऽपि यतीन्द्रः पण्डितवृन्दं तर्पितुकामः ।
मौर्यकुलं सत्कर्तुमिलायां सम्प्रति वृद्धो लोकविवृद्ध्यै ॥ ४ ॥

मश्च भश्च सश्च गश्च मभसगाः तैर्मगणभगणसगणगुरुभिर्युक्ता या सा मत्ता नाम ज्ञेया ज्ञातव्या । तद्यथा,—

मगणः भगणः सगणः गु० मगणः भगणः सगणः गु०

बिभ्रद्गङ्गाशिरसि कपालं धृत्वा हस्ते प्रमथपति र्यः ।
भिक्षालीलं चरति हरोऽयं युष्मानव्यात् त्रिभुवननाथः ॥ ५ ॥

---

* 'चम्पकमालेति पुस्तकान्तरपाठः' ।

नरजगैर्भवेन्मनोरमा ॥ ६ ॥
त्रिसगा अपि मेघवितानम् ॥ ७ ॥
रश्च सौ सगुरुर्मणिरागः ॥ ८ ॥
चम्पकमाला चेद्भमसागः ॥ ९ ॥

---

नश्च रश्च जश्च गश्च नरजगाः । तैर्नगणरगणजगणगुरुभिर्मनोरमा नाम भवेत् । तद्यथा,—

नगणः रगणः जगणः गु० नगणः रगणः जगणः गु०

अवनतामरेन्द्रमूर्ध्नि या स्फुरति या सदा मनोरमा ।
भवतु सा भवच्छ्रिये महा त्रिपुरसुन्दरी नखप्रभा ॥ ६ ॥

त्रयश्च ते साश्चेति त्रिसाः । त्रिसाश्च गश्च त्रिसगाः । इति द्वन्द्वः । अपीह सम्भावनायाम् । अपि सम्भाव्यते । सगणत्रयं गुरुरेकश्चेत् । तदा मेघवितानं नाम स्यात् । तद्यथा,—

सगणः सगणः सगणः गु० सगणः सगणः सगणः गु०

प्रणतक्षितिपालकिरीटो ल्लसदग्रमणिप्रभया यः ।

सगणः सगणः सगणः गु० सगणः सगणः सगणः गु०

शुशुभे स्वनखांशुभयाऽतो नृपतिः स पराक्रमबाहुः ॥ ७ ॥

रो रगणः । सश्च सश्च सौ सगणौ सगुरुर्गुरुसहितश्चेत् । तदा मणिरागो नाम स्यात् । तद्यथा,—

रगणः सगणः सगणः गु० रगणः सगणः सगणः गु०

याति वीतमलोऽपि विकारं सङ्गमेन विरुद्धगुणानाम् ।

रगणः सगणः सगणः गु० रगणः सगणः सगणः गु०

सन्निधौ स्फटिकोपलपङ्क्तो रज्यते ज्वलयुन्मणिरागैः ॥ ८ ॥

भश्च मश्च सश्च भमसाः गः गुरुः । भगणमगणसगणगुरवश्च यदि भवेयुस्तदा चम्पकमाला नाम स्यात् । तद्यथा,—

भगणः मगणः सगणः गु० भगणः मगणः सगणः गु०

सामिकवन्ती सामिबहिस्ते चम्पकमालाशालिकुलेयम् ।

त्वरितगतिस्तु न जनगैः ॥ १० ॥

---

११ त्रिष्टुभि २०४८

त्जौ ज्गौ गुरुणेयमुपस्थितोक्ता ॥ १ ॥

मः सो जो गुरुयुग्ममेकरूपम् ॥ २ ॥

---

भगणः मगणः सगणः गु०  भगणः मगणः सगणः गु०

हे विपरीतक्रीडनलोले ! कस्य मनो ना कर्षति बाले ! ॥ ९ ॥

नश्च जश्च नश्च गश्च नजनगाः तैर्नगणजगणनगणगुरुभिस्तु त्वरितगतिर्नाम स्यात् । तद्यथा,—

नगणः जगणः नगणः गु०  नगणः जगणः नगणः गु०

सरसिजभूप्रभृतिसुरैः शिरसिकृतं यदतिमुदा ।
तव दुरितं तदनुपमं हरतु हरेश्चरणयुगम् ॥ १० ॥

---

त्रिष्टुभि उदाहरति । त् च जश्च त्जौ ज् च गश्च ज्गौ । किम्भूतौ तौ ? गुरुणोपलक्षितौ सहितौ । तगणो जगणद्वयं गुरुद्वयं च चेत् तदा इयम् उपस्थिता नामोक्ता कथिता तद्यथा,—

तगणः जगणः जगणः गु०गु०  तगणः जगणः जगणः गु०गु०

संसारमहार्णवमध्यमग्ना–नुद्धर्तुमहर्निशमीहते यः ।
मद्दुःखमपाकुरुताद्दयाब्धिर्नाथः स सतामवलोकितेशः ॥ १ ॥

मः मगणः सः सगणः जः जगणः गुरुयुग्मं गुरुद्वयं च चेत् । तदा एकरूपं नाम स्यात् । तद्यथा,—

मगणः  सगणः जगणः गु०गु०  मगणः सगणः जगणः गु०गु०

पायात् त्वामवलोकितेश्वरोऽयं हीने दीनजनेनुकम्पकोऽयम् ।
यस्याऽभूच्छरदिन्दुकोटिभासा त्रैलोक्यं महसा पयः पयोधिः ॥ २ ॥

तश्च तश्च तौ जश्च गश्च जगौ गः गुरुः तगणद्वयं जगणो गुरुद्वयं च यदि भवेत् तदा इन्द्रवज्रा नाम स्यात् । तद्यथा,—

**स्यादिन्द्रवज्रा यदि तौ जगौ गः ॥ ३ ॥**

**उपेन्द्रवज्रा जतजास्ततो गौ ॥ ४ ॥**

***अनन्तरोदीरितलक्ष्मभाजौ**

---

तगणः तगणः जगणः गु०गु० तगणः तगणः जगणः गु०गु०

**सत्पाटवान् पक्षविलोपदक्षा लक्ष्मीः करोति प्रतिवादि मुख्यान् ।**
**मानातिरूढा तव दुर्निवारा वागीन्द्रवज्रा सिरिवाचलेन्द्रान् ॥ ३ ॥**

जश्च तश्च जश्च जतजाः । ततः तदनन्तरं गौ गुरू जगणतगणजगणाः गुरुद्वयं च चेत् तदा उपेन्द्रवज्रा नाम स्यात् । तद्यथा—

जगणः तगणः जगणः गु०गु० जगणः तगणः जगणः गु०गु०

**कुजार्कमन्देष्वपि कश्चिदेको यदाष्टमद्वादशजन्मयातः ।**
**तदा विशेषात् सच्छुभं प्रपद्यादुपेन्द्रवज्रा प्रतिमोपि योऽस्मिन् ॥ ४ ॥**

यासामेतौ यदीयौ "त्यदादीनाञ्चे"ति ईयच् प्रत्ययः । यदीयौ पादौ यासां चरणौ "अनन्तरोदीरितलक्ष्मभाजौ" यतः अनन्तरोदीरितयोः पूर्वोक्तयोरिन्द्रवज्रोपेन्द्रवज्रयोः लक्ष्मभाजौ लक्षणं भजेते । ता उपजातयः उपजातिनामानि भवन्ति । उपजातयो हि चतुर्दश भवन्ति । उक्तञ्च जयदेवेन,—

**"पादेन पादत्रितयेन चाष्टावर्धार्धयोगेन षडेव भेदाः ।**
**इतीन्द्रमाला खिलपूर्वमिश्राः प्रमाणतः षोडशभेदभिन्ना" इति ।**

( १ ) उ इ इ इ एका ( २ ) इ उ इ इ एका ( ३ ) इ इ उ इ एका ( ४ ) उ उ उ इ एका ( ५ ) इ इ इ उ एका ( ६ ) उ उ इ उ एका ( ७ ) उ इ उ उ ( ८ ) इ उ उ उ एका इत्येकस्य एकेन पादेनान्यैस्त्रिभिः पादैश्चाष्टभेदाः । ( ९ ) उ उ इ इ एका ( १० ) उ इ उ इ एका ( ११ ) इ उ उ इ एका ( १२ ) उ इ इ उ एका ( १३ ) इ उ इ उ एका ( १४ ) इ इ उ उ एका इत्यर्धद्वयसम्बन्धेन षडिति सर्वाश्चतुर्दश । इहार्धमिति पादद्वयमात्रमेव द्रष्टव्यम् । यथोक्ताश्चतुर्दश पूर्वोक्ताभ्यामिन्द्रवज्रोपेन्द्रवज्राभ्यां मिलिता षोडश इन्द्रमाला इत्युच्यते । तद्यथा,—

जगणः तगणः जगणः गु०गु० तगणः तगणः जगणः गु०गु०

**( १ ) यदि स्युराकारविशेषवन्तो बुद्धस्य शास्तुः सकला गुणौघाः ।**

---

*एकत्रपादे चरणद्वये वा पादत्रये वाऽन्यतरः स्थितश्चेत् । तयोरिहान्यत्र तदोहनीया चतुर्दशोक्ता उपजातिभेदाः ॥ अयमपि श्लोको वाराणसीनगरे शिलाक्षरैर्मुद्रिते कस्मिंश्चिद्वृत्तरत्नाकरपुस्तके दृश्यते । सतु बहुषु पुस्तकेषु नास्ति । तस्मात् पाठान्तरभेददर्शनार्थमिह लिखितः ॥

पादौ यदीयावुपजातयस्ताः † ।

तगणः तगणः जगणः गु०गु० तगणः तगणः जगणः गु०गु०

त्रैलोक्यगर्भेऽपि महावकाशे गच्छेयुरेते कथमप्रमाणाः ॥

तगणः तगणः जगणः गु०गु० तगणः तगणः जगणः गु०गु०

( २ ) तन्नादभूताः क्रमशालिनस्ते नृवीरसद्वैरि विघाति शौर्याम् ।

तगणः तगणः जगणः गु०गु० तगणः तगणः जगण गु०गु०

दीप्तस्वभावस्य हि चित्रभानोश्चित्रं न भस्मीकरणं तरूणाम् ॥

† पिङ्गलछन्दःसूत्रस्य संस्कर्त्रा पण्डितविश्वनाथशास्त्रिणा तत्र स्वसंस्करणेऽपि उपजातिभेद दर्शनार्थं पुस्तकान्तरपाठो दर्शितः । स तु पाठः प्राकृतपिङ्गले पिङ्गलमुनिना विहितक्रमेणैव भास्करशर्मणा संक्षेपेण वृत्तरत्नाकरसेतावपि पूर्वं दर्शितः । मयाप्यत्र बालानां सुखावबोधार्थं ततः समुद्धृत्य सतु पाठान्तरः संदर्श्यते ॥

पुस्तकान्तरपाठश्च । यथा चतुरक्षरप्रस्तारे चतुरक्षरस्थानीयलघुगुरुबोधकसरलवक्ररेखास्थापननियमेन प्रस्तारे क्रियमाणे षोडशभेदा जायन्ते । तथा चतुष्पादस्थापनीयैकतरवृत्ताद्यक्षर-चतुष्कप्रस्तारे उपजातिवृत्तद्वयाक्षरस्वरूपलघुगुरुस्थापननियमेन प्रस्तारे क्रियमाणेऽपि षोडशेव भेदा जायन्ते । यस्याद्यो वर्णो गुरुः सः गुरुस्थानीयः । यस्याद्यो लघुः स लघुस्थानीयः । सर्वत्रोपजातिप्रस्तारे बोध्यः । एतन्नियमेनात्र गुरुस्थानीय इकारो लघुस्थानीय उकारो बोद्धव्यः । यथा गुरोर्वक्ररेखाया अधस्ताल्लघोः सरलरेखां संस्थाप्योपरिस्थवच्छेषरेखाश्च संस्थाप्य ऊने गुरुंच दत्वा सर्वगुर्वादिसर्वलघ्वन्तः प्रस्तारः क्रियते । तथात्रापि चतुर्गुरुस्थानीयां चतुर्णामिकाराणां मध्ये प्रथमेकाराधस्ताल्लघुस्थानीयमुकारं विन्यस्य द्वितीयादित्रिवर्णानुपरिस्थानेव संस्थाप्य ऊने इकारं स्थापयेत् । यावच्छेषपङ्क्तावुकारचतुष्टयमायाति । अथ चतुरिकारात्मकः प्रथमो भेदः शुद्धेन्द्रवज्राख्यः । षोडशश्चतुरुकारात्मको भेदः शुद्धोपेन्द्रवज्राख्यो बोध्यः । शेषा मध्यस्थाश्चतुर्दशभेदाः । एतयोरेकद्व्यादिपादमिश्राभावादुपजातयस्ते भवन्ति । तासां चतुर्दशोपजातीनां चतुर्दशनामानि पिङ्गलेनोक्तानि । यथा यस्याः प्रथमपाद उपेन्द्रवज्राया द्वितीयाद्याः शेषा इन्द्रवज्रायाः सोपजातिः कीर्त्तिनाम्नी प्रथमेयम् ( उ इ इ इ ) द्वितीयोपजातिरियम् ( इ उ इ इ ) वाणीनाम्नी तृतीयेयम् ( उ उ इ इ ) मालानाम्नी । चतुर्थीयम् ( इ इ उ इ ) शाला नाम्नी । पञ्चमीयम् ( उ इ उ इ ) हंसीनाम्नी । षष्ठीयम् ( इ इ इ उ ) मायानाम्नी । सप्तमीयम् ( उ उ उ इ ) जायानाम्नी । अष्टमीयम् ( इ उ उ इ ) बालानाम्नी नवमीयम् ( उ इ इ उ ) आर्द्रानाम्नी । दशमीयम् ( इ उ इ उ ) भद्रानाम्नी । एकादशमीयम् ( उ उ इ उ ) प्रेमानाम्नी । द्वादशीयम् ( इ इ उ उ ) रामानाम्नी । त्रयोदशीयम् । ( उ इ उ उ ) ऋद्धिनाम्नी । चतुर्दशीयम् ( इ उ उ उ ) बुद्धिनाम्नी । उपजातिर्ज्ञातव्याः ।

तगणः तगणः जगणः गु०गु० तगणः तगणः जगणः गु०गु०

(३) रोधौ लतामण्डपयातकान्ता सम्भोगतः सर्पति काञ्चनादे ।

जगणः तगणः जगणः गु०गु० तगणः तगणः जगणः गु०गु०

ररक्षराजानमथव्यलीका–दुत्रासमुक्तः कलहंसनादः ॥

जगणः तगणः जगणः गु०गु० जगणः तगणः जगणः गु०गु०

(४) मृगच्छलेनैव तुषाररश्मी र्बिभर्त्ति देहेन कपोतधूम्रम् ।

जगणः तगणः जगणः गु०गु० जगणः तगणः जगणः गु०गु०

हराग्निदग्धस्य शरीरभस्म प्रेम्णा बबन्धे कुसुमायुधस्य ॥

तगणः तगणः जगणः गु०गु० तगणः तगणः जगणः गु०गु०

(५) माशोकशोकं भजपुष्पलक्ष्मीः कालेप्यरूढ प्रणया मयीति ।

तगणः तगणः जगणः गु०गु० जगणः तगणः जगणः गु०गु०

भावीयतेत्यद्रुमदुर्लभस्ते वधूरणन्नूपुरपादघातः ॥

जगणः तगणः जगणः गु०गु० जगणः तगणः जगणः गु० गु०

(६) गुणक्षयोपि प्रथितो गुणौघै रनीतिमान्नीति विचक्षणोऽपि ।

तगणः तगणः जगणः गु०गु० जगणः तगणः जगणः गु०गु०

अप्युद्धृतारिः परलोकभीरु र्भवन्निभो सोऽपि जगत्यधीशः ॥

जगणः तगणः जगणः गु०गु० तगणः तगणः जगणः गु०गु०

(७) मदेन दृप्तारिवधूजनानां वैधव्यमापादितमित्यलन्ते ।

जगणः तगणः जगणः गु०गु० जगणः तगणः जगणः गु०गु०

कुतोहि तावद्विविधाकृतास्ता वसन्ति कान्ताहृदयावदेते ॥

तगणः तगणः जगणः गु०गु० जगणः तगणः जगणः गु०गु०

(८) प्राणच्छिदां दैत्यपते–र्नखानामुपेयुषां भूषणतां क्षतेन ।

जगणः तगणः जगणः गु०गु० जगणः तगणः जगणः गु०गु०

प्रकाशकार्कश्य गुणौ दधानाः स्तनौ तरुण्याः परिवव्रुरेनम् ॥

तगणः तगणः जगणः गु० गु० जगणः तगणः जगणः गु० गु०

(९) अनन्यबद्धप्रणयाः समन्ताद्विशन्ति रत्नाकरमेव नद्यः ।

तगणः तगणः जगणः गु० गु० तगणः तगणः जगणः गु० गु०

लावण्यसारः कुलधाम–लक्ष्म्या * प्रायोभिगम्यः पतिरङ्गनानाम् ॥

तगणः तगणः जगणः गु० गु० तगणः तगणः जगणः गु० गु०

(१०) त्वयार्थिवर्गे दिशतार्थमिष्टं नूनं गुणौघेपि समर्पितश्च ।

जगणः तगणः जगणः गु० गु० तगणः तगणः जगणः गु० गु०

यतः स पर्याप्तमनोरथेन देशान्तरेष्वर्थिजनेन नीतः ॥

तगणः तगणः जगणः गु० गु० जगणः तगणः जगणः गु० गु०

(११) क्षीणे परित्यक्तकलङ्कभावः समग्रभावे तु विरूढकार्ष्णः ।

जगणः तगणः जगणः गु० गु० तगणः तगणः जगणः गु० गु०

न चन्द्रमस्तद्वदनानुकारी दोषाकरः साधुसमः कदा स्यात् ॥

जगणः तगणः जगणः गु० गु० तगणः तगणः जगणः गु० गु०

(१२) मनोहरा–त्यङ्गजपूर्णकुम्भ–ग्रैवेयसूत्रप्रकरोपमेण ।

तगणः तगणः जगणः गु० गु० जगणः तगणः जगणः गु० गु०

मुक्ताकलापेन परिष्कृताङ्गाः शिरोधरापीनपयोधरायाः ॥

तगणः तगणः जगणः गु० गु० जगणः तगणः जगणः गु० गु०

(१३) अम्भश्च्युतः कोमलरत्नराशी–नपांनिधिः फेनपिनद्धभासः ।

तगणः तगणः जगणः गु० गु० जगणः तगणः जगणः गु० गु०

यत्रातपे दातुमिवाधितल्पं † प्रसारयामास तरङ्गहस्तैः ॥

तगणः तगणः जगणः गु० गु० तगणः तगणः जगणः गु० गु०

(१४) आकर्षतेवोर्ध्वमतिकृशीयानत्युन्नतत्वात्कुचमण्डलेन ।

जगणः तगणः जगणः गु० गु० जगणः तगणः जगणः गु० गु०

ननाम मध्योति–गुरुत्वभाजा नितान्तमाक्रान्त इवाङ्गनानाम् ॥

* "त्रयोऽभिगम्यः" इति पुस्तकान्तरपाठः । † 'विस्तारयामासे'ति पुस्तकान्तरपाठः ।

**इत्थं किलान्यास्वपि मिश्रितासु ।**
**स्मरन्ति जातिष्विदमेव नाम* ॥ ४ ॥**

इत्थम् अनेन प्रकारेण अन्यास्वपि इन्द्रवज्रोपेन्द्रवज्राभ्यामितरासु मिश्रितासु जातिष्वपि किल निश्चयेन इदमेव उपजातिरित्येव नाम स्मरन्ति वदन्ति । अन्यजातीनां च मिश्रता दृश्यते तद्यथा,—

तगणः तगणः जगणः रगणः जगणः तगणः जगणः रगणः

**इत्थं रथाश्वेभ–निषादिनां प्रगे गणो नृपाणामथ तोरणाद्बहिः ।**

---

* एवं वंशस्थेन्द्रवंशयोरेतादृशेतरयोश्चोपजातिप्रस्तारेषु चतुर्दश भेदा जायन्ते । अत्रेकारवकाराभ्यां पूर्ववत् प्रस्तारः कर्तव्यः । तत्र गुरुस्थानीय इकारो लघुस्थानीयो वकारः । एवमन्यत्राप्युन्नेयम् । यथा समाक्षरपादवृत्तद्वयमिश्रणे उपजातिर्भवति । तथा विषमाक्षरपादवृत्तद्वयत्रयादिमिश्रणेऽप्युपजातिर्भवति । तत्र वंशस्थोपेन्द्रवज्रामिश्रितोपजातेरुदाहरणं वाल्मीकिरामायणे सुन्दरकाण्डे यथा,—

जगणः तगणः जगणः रगणः जगणः तगणः जगणः गु०गु०

**"नमस्तु वाचस्पतये सचक्रिणे स्वयम्भुवे चापि हुताशनाय ।**

जगणः तगणः जगणः रगणः जगणः तगणः जगणः रगणः

**अनेन चोक्तं यदिदं ममाग्रतो वनौकसांतच्च तथास्तु नान्यथा" इति ॥**

अत्र स्वयम्भुवेति द्वितीयपाद उपेन्द्रवज्राया अन्ये त्रयः पादा वंशस्थस्य । इन्द्रवंशोपेन्द्रवज्रावंशस्थमिश्रिताया उपजातेरुदाहरणं भागवते दशमस्कन्धे यथा,—

तगणः तगणः जगणः रगणः जगणः तगणः जगणः गु०गु०

**"तावत्प्रतिष्ठास्त्वसुरोदरान्तरे परं न गीर्णाः शिशवः सवत्साः ।**

जगणः तगणः जगणः रगणः जगणः तगणः जगणः रगणः

**प्रतीक्षमाणेन बकारिवेशनं हतस्वकान्तस्मरणेन रक्षसा" इति ॥**

इन्द्रवज्रेन्द्रवंशोपेन्द्रवज्रावंशस्थमिश्रिताया उपजातेरुदाहरणं प्रबोधचन्द्रोदये यथा,—

तगणः तगणः जगणः गु०गु० तगणः तगणः जगणः रगणः

**"विद्याप्रबोधोदयजन्मभूमिर्वाराणसी सूक्तपुरी निरत्यया ।**

जगणः तगणः जगणः गु० गु० जगणः तगणः जगणः रगणः

**अतः कुलच्छेदविधिर्विविधित्सुः निवस्तुमत्रेच्छति नित्यमेव सः" इति**

**नजजलगैर्गदिता सुमुखी ॥ ५ ॥**

तगणः तगणः जगणः रगणः जगणः तगणः जगणः रगणः

**प्रस्थानकालक्षमवेषकल्पना–कृतेक्षणाक्षेपमुदीक्षताच्युतम् ॥**

अत्रायुक्पादाविन्द्रवंशायाः । युक्पादौ तु वंशस्थस्य । वसन्ततिलकेन्द्रवज्रयोर्मिश्रिता दृश्यते । तद्यथा,—

तगणः भगणः जगणः जगणःल०ल० तगणः तगणः जगणः गु०गु०

**कल्लोलवेल्लित–दृषत्परुषप्रहारैः रत्नानि रत्नाकर मावमंस्थाः ।**

तगणः भगणः जगणः जगणः गु०गु० तगणः भगणः जगणः जगणः गु० गु०

**किं कौस्तुभेन भवतो विहितेन नाम याच्ञा–प्रसारितकरः पुरुषोत्तमोऽपि ॥**

अत्र प्रथमतृतीयपादा वसन्ततिलकस्य । द्वितीय इन्द्रवज्रायाः । एवमन्यत्रापि यथायोगं बोद्धव्यम् ।

नश्च जश्च जश्च लश्च गश्च नजजलगाः । तैर्नगणजगणद्वयलघुगुरुभिः सुमुखी गदिता सुमुखीनाम्नी कथिता । तद्यथा,—

नगणः जगणः जगणः ल०गु० नगणः जगणः जगणः ल०गु०

**मयि दधति दृशमेकतरां मुहुरितरांच सखीषु मुदा ।**
**मधुरगिरा स्मितसारजुषा मदयति सा हृदयं सुमुखी ॥ ५ ॥**

भश्च भश्च भश्च भभभमिति समाहारे नपुंसकम् । तस्माद्भगणत्रयात्परतः गौ गुरुद्वयं च चेत् तदा इदं दोधकवृत्तं स्यात् । तद्यथा,—

---

अत एव समाक्षरजातिमिश्रणमेवोपजातित्वं द्वयोरेव जात्योर्मिश्रणमेवोपजातित्वमिति च व्याचक्षाणानां प्राचां मतमनादरणीयम् । इति वृत्तरत्नाकरटीकाकृतोक्तम्[1] । अत्रेदमवधेयम् । जातिद्वयमिश्रणे पूर्वोक्तनियमेन प्रस्तारे क्रियमाणे चतुर्दश भेदा जायन्ते । प्रस्तारसिद्ध्यर्थं तत्रैकस्य नामाद्यक्षरस्य गुरुत्वकल्पना अपरस्य लघुत्वकल्पना कार्या । जातित्रयजातिचतुष्टयमिश्रणे तु नोक्तप्रस्तारविधिः प्रसज्यते । गुरुलघ्वोश्च द्विव्यक्तित्वात् द्विव्यक्तिकस्थल एव तत्प्रसक्तिः । जातित्रयजातिचतुष्टयमिश्रणस्थले तु पादसङ्ख्यास्थलाभिषिक्तानामेकद्वित्रिचतुरङ्कनिर्दिष्टानामिन्द्रवज्रोपेन्द्रवज्रावंशस्थाद्यक्षराणां पादव्यत्ययविन्यासक्रमेण प्रस्तारे कृते प्रथमं चत्वारो भेदा जायन्ते । पुनस्तेषां पादविन्यासव्यत्ययसमये नामविशेषपौर्वापर्यविन्यासक्रमभेदेन बहवो भेदा भवन्ति । यथा प्रथमद्वितीयौ पादौ इन्द्रवज्रायाः तृतीयचतुर्थावुपेन्द्रवज्रावंशस्थयोः । इत्येको भेदः द्वितीयतृतीयौ इन्द्रवज्रायाः प्रथमचतुर्थौ उपेन्द्रवज्रावंशस्थयोः । इति द्वितीयो भेदः ।

---

( १ ) अयन्तु टीकाकारो नाम वृत्तरत्नाकरसेतुकृत् भास्कर एवेति ज्ञातव्यः ।

**दोधकवृत्तमिदं भभभाद्गौ ॥ ६ ॥**
**शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः ॥ ७ ॥**

भगणः भगणः भगणः गु०गु० भगणः भगणः भगणः गु०गु०

**या न ययौ प्रियमन्यवधूभ्यः सारतरागमनायतमानम् ।**
**तेन सहेह बिभर्त्ति रहः स्त्री सारतरागमनायतमानम् ॥ ६ ॥**

म् च तश्च म्तौ तश्च गश्च तगौ गः गुरुः । मगणतगणद्वयं गुरुद्वयं च चेत् तदा शालिनी उक्ता शालिनी नाम्ना कथिता । अब्धिलोकैः क्रमेण चतुर्भिः सप्तभिर्वर्णैर्यतिः स्यादित्यध्याहार्यम् । तद्यथा,—

मगणः तगणः तगणः गु०गु० मगणः तगणः तगणः गु०गु०

**कृत्वा पुंवत्पातमुच्चै-र्भृगुभ्यो मूर्ध्नि ग्राव्णां जर्जरा निर्झरौघाः ।**
**कुर्वन्ति द्यामुत्पतन्तः स्मरार्तस्वर्लोकस्त्रीगात्रनिर्वाणमत्र ॥ ७ ॥**

म् च भश्च म्भौ तश्च गश्च तगौ गः गुरुः । मगणभगणतगणाः गुरुद्वयं च चेत् तदा इयम् वातोर्मी गदिता वातोर्मी नाम्ना कथिता । तद्यथा,—

---

| पादाङ्काः | पादाङ्काः | पादाङ्काः | पादाङ्काः |
|---|---|---|---|
| १ भेदः | २ भेदः | ३ भेदः | ४ भेदः |
| १ इ० | १ उ० | १ उ० | १ इ० |
| २ इ० | २ इ० | २ वं० | २ वं० |
| ३ उ० | ३ इ० | ३ इ० | ३ उ० |
| ४ वं० | ४ वं० | ४ इ० | ४ इ० |

तृतीयचतुर्थाविन्द्रवज्रायाः । प्रथमद्वितीयावुपेन्द्रवज्रावंशस्थयोः । इति तृतीयो भेदः । प्रथमचतुर्थाविन्द्रवज्रायाः । द्वितीयतृतीयौ वंशस्थोपेन्द्रवज्रयोः इति चतुर्थोभेदः । इ०, उ०, वं०, वं०; उ०, इ०, वं०, वं०, वं०, इ०, उ०, वं०; वं०, वं०, इ०, उ०; वं०, वं०, उ०, इ०; इत्यादि । एवमग्रेऽप्यूहनीयम् । एवं सर्वत्रोपजातिस्थले ज्ञेयम् । उपजातीनां नामोल्लेखस्तु दृष्टान्तप्रदर्शनार्थमुपलक्षणमात्रम् । सर्वा एता उपजातयोर्धसमविषमवृत्तान्तर्भूता ज्ञेयाः ॥

वातोर्मी गदिता म्भौ तगौ गः ॥ ८ ॥
म्भौ न्लौ गः स्याद्भ्रमरविलसितम् ॥ ९ ॥
*पञ्चरसैः स्त्री भतनगगैः स्यात् ॥ १० ॥
रान्नराविह रथोद्धता लगौ ॥ ११ ॥

---

मगणः भगणः तगणः गु०गु० मगणः भगणः तगणः गु०गु०

पृथ्वीं पृथ्वीं त्वयि राजाधिराजे शासत्यासीन्नरलोकः समृद्धः ।
सर्वे भूपा वनवासं प्रविष्टा ध्यायन्तस्ते सततं वीर वीर्यम् ॥ ८ ॥

म् च भश्च म्भौ न् च लश्च न्लौ गः गुरुः । मगणभगणनगणाः लघुर्गुरुश्च चेत् तदा भ्रमरविलसितं नाम स्यात् । तद्यथा,—

मगणः भगणः नगणः ल०गु० मगणः भगणः नगणः ल०गु०

शान्तं दान्तं त्रिदशनरगुरुं सर्वज्ञं यः प्रणमति सततम् ।

मगणः भगणः नगणः ल०गु० मगणः भगणः नगणः ल०गु०

तस्याऽपाये न भवति गमनं सत्यं सत्यं जगुरिति मुनयः ॥ ९ ॥

भश्च तश्च नश्च गश्च गश्च भतनगगाः । तैर्भगणतगणनगणगुरुद्वयैः स्त्री स्यात् स्त्री नाम भवति । अस्य स्त्रीवृत्तस्य पञ्चरसैः पञ्चभिः षड्भिश्च वर्णैर्यतिः स्यात् । तद्यथा,—

भगणः तगणः नगणः गु०गु० भगणः तगणः नगणः गु०गु०

राहुलनामा मुनिरतिविद्वान् सद्गुणभारी त्रिपिटकधारी ।
मौर्यकुलाब्धिप्रभवसुधांशु-र्जन्मनि जन्मन्यपि मम मित्रम् ॥ १० ॥

रः रगणः तस्मात् । नश्च रश्च नरौ नगणरगणौ लश्च गश्च लगौ लघुगुरू च चेत् । तदा इहशास्त्रे रथोद्धता नाम स्यात् । तद्यथा,—

रगणः नगणः रगणः ल०गु० रगणः नगणः रगणः ल०गु०

अञ्जनाभमरविन्दलोचनं काञ्चनाभमहिभोगशायिनम् ।
तं जना भजत कौस्तुभप्रभं रञ्जनाभरणपीनवक्षसम् ॥ ११ ॥

रश्च नश्च भश्च रनभम् । रगणनगणभगणाः । तस्मात् गुरुयुग्मम् गुरुद्वयं च चेत् । तदा इयम् स्वागता नाम स्यात् । तद्यथा,—

---

* "बाणरसैः स्याद्भतनगगैः श्रीः" क्वचित् ।

**स्वागतेति रनभाद्गुरु युग्मम् ॥ १२ ॥**
**ननसगगुरुरचिता पृथ्वी ( वृत्ता वा ) ॥ १३ ॥**
**ननरलगुरुभिः सुभद्रिका ( चन्द्रिका वा ) ॥ १४ ॥**
**वैतिका रजौ रलौ गुरुर्यदा ॥ १५ ॥**
**मौक्तिकमाला यदि भतनाद्गौ ॥ १६ ॥**

---

रगणः नगणः भगणः गु० गु० रगणः नगणः भगणः गु० गु०

**मन्मथाग्निपरितप्तमनस्के ! चन्दनं किमनुलिम्पसि बाले ।**
**किं न वेत्सि बहिरङ्गविधानादन्तरङ्गविधिरेव बलीयान् ॥ १२ ॥**

नश्च नश्च सश्च गश्च गुरुश्च ननसगगुरवः । तै–र्नगणद्वयसगणगुरुयुगलैः रचिता कृता पृथ्वी नाम स्यात् । वृत्ता वा अस्य पृथ्वीवृत्तस्य वृत्तेति वा नाम स्यात् । तद्यथा,—

नगणः नगणः सगणः गु० गु० नगणः नगणः सगणः गु० गु०

**त्वयि समिति न परतो याते मनसि वपुषि गिरि–चारिण्यः ।**
**झटिति भवति भवतोऽमीषामसुखमरुचिरपशब्दत्वम् ॥ १३ ॥**

नश्च नश्च रश्च लश्च गुरुश्च ननरलगुरवः । तै–र्नगणद्वयरगणलघुगुरुभिः सुभद्रिका नाम स्यात् । चन्द्रिका वा अस्य वृत्तस्य चन्द्रिकेति वा नाम स्यात् । तद्यथा,—

नगणः नगणः रगणः ल० गु० नगणः नगणः रगणः ल० गु०

**कुचतटविनिवारितोदरा कुवलयनिभलोललोचना ।**
**विलुलितविनतालताकुलादिव इव भुवमागता बभौ ॥ १४ ॥**

रश्च जश्च रजौ रश्च लश्च रलौ । गुरुरिति प्रसिद्धः । रगणजगणरगणाः लघुगुरू च यदा स्युः तदा वैतिका नाम स्यात् । तद्यथा,—

रगणः जगणः रगणः ल० गु० रगणः जगणः रगणः ल० गु०

**मानसं सदा विधेहि सत्कृतौ मुञ्च मुञ्च दुर्जनस्य सङ्गतिम् ।**
**देहि दानमन्वहं विभूतये भावयेत्तथागतं विमुक्तये ॥ १५ ॥**

भश्च तश्च नश्च भतनमिति समाहारद्वन्द्वः । तस्माद्भगणतगणनगणात् परौ गौ गुरू च यदि तदा मौक्तिकमाला नाम स्यात् । तद्यथा,—

भगणः तगणः नगणः गु० गु० भगणः तगणः नगणः गु० गु०

**मन्मथदग्धं युवतिमनस्कं सेचय गाढं स्वजनसुधाभिः ।**
**मौक्तिकमाला शशिघनसारैः साम्यति नैव प्रियसख ! कामम् ॥ १६ ॥**

ज् च सश्च जसौ जगणसगणौ । तात्तगणात्परौ गकारौ गुरू चेत् । तदा इदम् उपस्थितं नाम स्यात् । तद्यथा,—

उपस्थितमिदं ज्सौ ताद्गकारौ ॥ १७ ॥

१२ अथ जगत्याम् ॥ ४०१६ ॥
चन्द्रवर्त्मगदितं तु रनभसैः ॥ १ ॥
जतौ तु वंशस्थमुदीरितं जरौ ॥ २ ॥
स्यादिन्द्रवंशा ततजै-रसंयुतैः ॥ ३ ॥

जगणः सगणः तगणः गु०गु० जगणः सगणः तगणः गु०गु०

उपस्थितमिदं भक्त्या भजेत तथागतपदं श्रेयस्कराग्रम् ।
* नृपागतसुखं मुञ्चन्तिसन्तो वदामि कृपया गुरुं वचस्ते ॥ १७ ॥

जगत्यामुदाहरति । रश्च नश्च भश्च सश्च रनभसाः । तैः रगणनगणभगणसगणैस्तु चन्द्रवर्त्म नाम गदितं प्रोक्तम् । तद्यथा,—

रगणः नगणः भगणः सगणः

सन्दधक्षरित-दानमलिनतो
† गन्धचक्रमपनीय तनुखचम् ॥
शं करोतु तव कुञ्जरवदनः
शंभुजः प्रमथितासुरनिकरः ॥ १ ॥

जश्च तश्च जतौ जश्च रश्च जरौ । जगणतगणौ जगणरगणौ तु यदि । तदा वंशस्थमुदीरितं वंशस्थमिति नाम्ना कथितम् । तद्यथा,—

जगणः तगणः जगणः रगणः जगणः तगणः जगणः रगणः

नृपः पराक्रान्तिभुजो महीभुजां शिरोमणिः पण्डितमण्डली-सखः ।
स रामचन्द्रं कविभारतिद्विजं चकार बौद्धागमचक्रवर्तिनम् ॥ २ ॥

तश्च तश्च जश्च ततजाः । तैस्तगणतगणजगणैः रसंयुतैः रगणसहितैः । इन्द्रवंशा नाम स्यात् । तद्यथा,—

तगणः तगणः जगणः रगणः तगणः तगणः जगणः रगणः

शोकोष्णनिःश्वासमरुद्भिरायतैः सन्तापितेनेव तवारियोषिताम् ।
भित्त्वाधरं ‡ सप्रतिघाश्रुशीकरै रागेण नेत्रद्वयमास्पदं कृतम् ॥ ३ ॥

---

* "नोपागतसुख"मिति पुस्तकान्तरपाठः । † "गन्धचक्रमपनीय तनुपट"मिति पुस्तकान्तरपाठः । ‡ "सम्प्रतिसाश्रुशीकरः" क्वचित् ।

**इह तोटकमम्बुधिसैः प्रमितम् ॥ ४ ॥**
**द्रुतविलम्बितमाह नभौ भरौ ॥ ५ ॥**
**वसुयुगविरतिर्नौ म्यौ पुटोऽयम् ॥ ६ ॥**
***प्रमुदितवदना भवेन्नौ ररौ ॥ ७ ॥**

---

सश्च सश्च सश्च सश्च सा इत्येकशेषः । तैः अम्बुधिसैः चतुर्भिः सगणैः इह छन्दसि तोटकं नाम प्रमितं प्रमाणीकृतम् । तद्यथा,—

सगणः सगणः सगणः सगणः सगणः सगणः सगणः सगणः

**स तथेति विनेतुरुदारमतेः प्रतिगृह्य वचो विससर्ज मुनिम् ।**
**तदलब्धपदं हृदि शोकघने प्रतियातमिवान्तिकमस्य गुरोः ॥ ४ ॥**

नश्च भश्च नभौ भश्च रश्च भरौ नगणभगणौ भगणरगणौ च यदि स्याताम् । तदा द्रुतविलम्बितं नाम आह ब्रूते आचार्य इति शेषः । तद्यथा,—

नगणः भगणः भगणः रगणः नगणः भगणः भगणः रगणः

**अपि दलं मुकुलेवकुले यया पदमदायि कदापि न तृष्णया ।**
**अहह सा सहसा विधुरे विधौ मधुकरो बदरीमनुवर्तते ॥ ५ ॥**

नश्च नश्च नौ म् च यश्च म्यौ नगणनगणौ मगणयगणौ च चेत् । तदा अयं पुटो नाम स्यात् । स कींभूतः ? वसुयुगविरतिः वसुभिरष्टाभिर्वर्णैः युगैः चतुर्भिर्वर्णैश्च विरतिर्यतिर्यस्येत्यन्यपदसमासः । तद्यथा,—

नगणः नगणः मगणः यगणः नगणः नगण मगणः यगणः

**कनकरुचिजटाग्रं कालकण्ठं शशिशकलविराजं मौलिभाजम् ।**
**सकलभवलताया नाशहेतुं प्रणमत परमीशं लोकनाथम् ॥ ६ ॥**

नश्च नश्च नौ रश्च रश्च ररौ नगणद्वयं रगणद्वयं च चेत् ! तदा प्रमुदितवदना नाम भवेत् । तद्यथा,—

नगणः नगणः रगणः रगणः नगणः नगणः रगणः रगणः

**अपि सुरभिरभाजि पुष्पश्रिया-मतनुतर-तयेव सन्तानकः ।**
**तरुणपरभृतस्वरं-रागिणा—मतनुतरतयेव सन्तानकः ॥ ७ ॥**

न् च यश्च न्यौ नगणयगणौ । किंभूतौ तौ ? नयसहितौ नयाभ्यां सहितौ नगणयगणाभ्यां युक्तौ चेत् । तदा कुसुमविचित्रा नाम स्यात् । तद्यथा,—

---

* "वसुयुगविरतिर्ननौ रौ प्रभे"ति मल्लिनाथसम्मतम् । "नयुगरयुगयुगगौरीमते"ति कौमुदीकारसम्मतम् ॥

**नयसहितौ न्यौ कुसुमविचित्रा ॥ ८ ॥**

**ननभरसहिताभिहितोज्ज्वला ॥ ९ ॥**

**पञ्चाश्वैश्छिन्ना वैश्वदेवी ममौ यौ ॥ १० ॥**

***अब्ध्यष्टाभिर्जलधरमाला म्भौ स्मौ ॥ ११ ॥**

---

नगणः यगणः नगणः यगणः नगणः यगणः नगणः यगणः

**अनियतमायुः प्रकृतिमला श्रीः सुखमतिमन्दं जगति तथापि ।**
**न भजति लोको दशबलदेवं शरणममुं धिग्व्यपगतबुद्धिः ॥ ८ ॥**

नश्च नश्च भश्च रश्च ननभराः । तैर्नगणद्वयभगणरगणैः सहिता संयुक्ता उज्ज्वला अभिहिता उज्ज्वलेति नाम्ना कथिता । तद्यथा,—

नगणः नगणः भगणः रगणः नगणः नगणः भगणः रगणः

**सकलगुणनिधिः करुणाम्बुधि-र्विरहितवृजिनः सुखदो जिनः ।**
**भजदमरतरुर्जगतां गुरुः स हरतु भवतः कुमतिं सतः ॥ ९ ॥**

मश्च मश्च ममौ यश्च यश्च याविल्येकशेषः । मगणद्वयं यगणद्वयं च चेत् । तदा वैश्वदेवी नाम स्यात् । एषा पञ्चाश्वैश्छिन्ना पञ्चभिः सप्तभिर्वर्णैश्छिन्ना अवसिता । तद्यथा,—

मगणः मगणः यगणः यगणः मगणः मगणः यगणः यगणः

**पान्थ-स्त्रीचेतोलक्षभेदक्षमाम्भो-धारानाराचक्षेपे पयोधः पयोधः ।**
**कालं † संहर्तुं यानि तानि प्रजानां बौद्धोक्त्तां शान्तिं यान्ति चेतो-रजांसि ॥१०॥**

म् च भश्च म्भौ स् च मश्च स्मौ । मगणभगणौ सगणमगणौ च चेत् । तदा जलधरमाला नाम स्यात् । अस्य वृत्तस्य अब्ध्यष्टाभिः चतुर्भिरष्टाभिश्च वर्णैर्यतिर्भवति । तद्यथा,—

मगणः भगणः सगणः मगणः मगणः भगणः सगगः मगणः

**दिव्यस्त्रीणां सचरणलाक्षारागारक्तापाते निपतितपुष्पापीडाः ।**
**पीडाभाजां कुसुमितमाला यासां शंसन्त्यस्मिन् सुरतविशेषं शय्याः ॥११॥**

नश्च जश्च नजौ ताभ्यां नगणजगणाभ्याम् । भ् च यश्च भ्यौ भगणयगणौ चेत् । तदा इह छन्दसि नवमालिनी नाम स्यात् । तद्यथा,—

---

* "अब्ध्यंशैरसज्जलधरमालाम्भौ स्मा"विति पुस्तकान्तरपाठः । † 'तालम्' क्वचित् ।

*इह नवमालिनी नजाभ्यां परौ भ्यौ ॥ १२ ॥
स्वरशर–विरतिर्ननौ रौ प्रभा ॥ १३ ॥
भवति नजावथ मालती जरौ ॥ १४ ॥
इति वद तामरसं नजजाद् यः ॥ १५ ॥
रसैः–र्जसजसा जलोद्धतगतिः ॥ १६ ॥

---

नगणः जगणः भगणः यगणः नगणः जगणः भगणः यगणः

धवलितविश्वमम्बुरुहषण्डैरनुमितरात्रिवासरविभागम्।
हरहसिता विसारि तव तुष्ट्यै भवतु भवद्यशो विसरगौरम् ॥ १२ ॥

नश्च नश्च ननौ रश्च रश्च रावित्येकशेषः । नगणद्वयं रगणद्वयं च चेत्। तदा प्रभा नाम स्यात्। अस्य वृत्तस्य स्वरशरैः सप्तभिः पञ्चभिर्वर्णैर्विरतिर्यतिः स्यात्। तद्यथा,—

नगणः नगणः रगणः रगणः नगणः नगणः रगणः रगणः

अयि सखि! सततं वदस्यन्यथा त्वयि पुनरधमः करोत्युत्तरम्।
जगति च भवतु प्रभासप्रिया विरहिणि मयि साऽस्तु वह्निप्रभा ॥ १३ ॥

नश्च जश्च नजौ जश्च रश्च जरौ। नगणजगणौ अथ अनन्तरम्। जगणरगणौ चेत्। तदा मालती नाम भवति। तद्यथा,—

नगण जगणः जगणः रगणः नगणः जगणः जगणः रगणः

इति निभृता समुवाच राधिका स्थितवति मानिनि माधवे पुरः।
घटय हरेर्वनमालती तनुः प्रणमति या सखि ते पुनः पुनः ॥ १४ ॥

नश्च जश्च जश्च नजजमिति समाहारे नपुंसकम् । तस्मान्नगणजगणद्वयात् परो यः यगणश्चेत्। तदा इदम् तामरसं नाम वद कथय। भोः शिष्येति शेषः। तद्यथा,—

नगणः जगणः जगणः यगणः नगणः जगणः जगणः यगणः

रिपुनृपतिव्रज-मूर्ध्नि किरीटः स्फुरदुरुरत्नकलावलिकम्बुः।
विहरति यस्य रणोत्सुकपाणिः स जयति भूपपराक्रमबाहुः ॥ १५ ॥

जश्च सश्च जश्च सश्च जसजसाः। तैर्जगणसगणजगणसगणैर्जलोद्धतगतिर्नाम स्यात्। अस्य वृत्तस्य रसैः षड्भिर्वर्णैर्यतिः स्यात्। तद्यथा,—

जगणः सगणः जगणः सगणः जगणः सगणः जगणः सगणः

समीरशिशिरः शिरः सुवसतां सतां जवनिका निकामसुखिनाम्।

---

* "इह नवमालिका नजभयैः स्या"दिति पुस्तकान्तरपाठः।

**भुजङ्गप्रयातं भवेद्यैश्चतुर्भिः ॥ १७ ॥**
**रैश्चतुर्भिर्युता स्रग्विणी संमता ॥ १८ ॥**
**भुवि भवेन्नभजरैः प्रियंवदा ॥ १९ ॥**
**त्यौ त्यौ मणिमाला छिन्ना गुहवक्त्रैः ॥ २० ॥**

---

**विभर्त्ति जनयन्नयं मुदमपामपायधवला बलाहकततिः ॥ १६ ॥**

यश्च यश्च यश्च यश्च या इत्येकशेषः । चतुर्भिर्यगणैर्भुजङ्गप्रयातं नाम भवेत् । तद्यथा,

यगणः यगणः यगणः यगणः यगणः यगणः यगणः यगणः

**अनात्मन्यनित्ये–शुभे दुःखदुःखे दुरन्तेऽत्र संसारचक्रे भ्रमन्तम् ।**
**त्वमेकोऽसि मां त्रातुमीशो दयाब्धे प्रभोऽतः प्रसीद प्रसीद प्रसीद॥१७॥**

रश्च रश्च रश्च रश्च रा इत्येकशेषः । चतुर्भी रगणैर्युता युक्ता स्रग्विणी नाम संमता प्रोक्ता । तद्यथा,—

रगणः रगणः रगणः रगणः रगणः रगणः रगणः रगणः

**अङ्गनामङ्गनामन्तरा माधवो माधवं माधवं चान्तरेणाङ्गनाः ।**
**इत्थमाकल्पिते मण्डले मध्यगः संजगौ वेणुना देवकीनन्दनः ॥ १८ ॥**

नश्च भश्च जश्च रश्च नभजराः । तैर्नगणभगणजगणरगणैः भुवि छन्दोभूमौ प्रियंवदा नाम भवेत् । तद्यथा,—

नगणः भगणः जगणः रगणः नगणः भगणः जगणः रगणः

**सतततुङ्गकरुणोर्मिसागरे कथितमुन्मथितकल्मषैरिव ।**
**यदपवर्गफलदं ममामृतं तदितरद्गरलमेव जल्पितम् ॥ १९ ॥**

त् च यश्च त्यौ पुनरपि च त् च यश्च त्यौ । तगणयगणौ तगणयगणौ च चेत् । तदा मणिमाला नाम स्यात् । एषा गुहवक्त्रैः षड्भिर्वर्णैश्च छिन्ना अवसानीकृता । तद्यथा,—

तगणः यगणः तगणः यगणः तगणः यगणः तगणः यगणः

**वृन्दारकवृन्दामन्दीकृतवन्द्यं वन्दे जननन्दं स्कन्दं शिवकन्दम् ।**
**चण्डीकृतसन्धं बन्धुं गुणसिन्धुं कुन्दं पदकुन्दं विन्देऽमरविन्द्यम् ॥ २० ॥**

तश्च भश्च तभौ जश्च रश्च जरौ । तगणभगणौ जगणरगणौ यदि । तदा धीरैः छन्दोविद्भिः ललिता नाम अभाणि कथिता । तद्यथा,—

धीरैरभाणि ललिता तभौ जरौ ॥ २१ ॥
प्रमिताक्षरा सजससैरुदिता ॥ २२ ॥

---

२३ अथातिजगत्याम् ८१९२
तुरगरसयतिर्नौ ततौ गः क्षमा ॥ १ ॥
म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीऽयम् ॥ २ ॥

---

तगणः भगणः जगणः रगणः तगणः भगणः जगणः रगणः

चोलीवधूवदनपङ्कजश्रिया–मासामकालजलदोदयस्थिराम् ।
त्वं सर्वदो नरपते गुणप्रियो जीयाः पराक्रमभुजेन्द्र ! भूतले ॥ २१ ॥

सश्च जश्च सश्च सश्च सजससाः । तैः सगणजगणसगणद्वयैः प्रमिताक्षरानाम उदिता प्रोक्ता । तद्यथा,—

सगणः जगणः सगणः सगणः सगणः जगणः सगणः सगणः

रजनीमवाप्य रुचमाप शशी सपदि व्यभूषयदसावपि ताम् ।
अवलम्बितक्रममहो महता–मितरेतरप्रकृतिमच्चरितम् ॥ २२ ॥

अतिजगत्यामुदाहरति । नश्च नश्च नावित्येकशेषः । तश्च तश्च ततौ गः गुरुः नगणद्वयं तगणद्वयं च गुरुरेकश्चेत् । तदा क्षमा नाम स्यात् । सा किंभूता ? तुरगरसयतिः तुरगैः सप्तभिः रसैः षड्भिश्च यतिर्यस्या इत्यन्यपदार्थसमासः । तद्यथा,—

नगणः नगणः तगणः तगणः गु० नगणः नगणः तगणः तगणः गु०

क्षणमपि सहते या न ते दर्शनं हरि हरि विरहे सा कथं प्राणिति ।
शृणु मम वचनं मा विलम्बं कुरु व्रज सपदि हरे ! राधिकां* जीवय॥१॥

म् च नश्च म्नौ ज् च रश्च ज्रौ गः गुरुः मगणनगणौ जगणरगणौ गुरुरेकश्च चेत् । तदा इयं प्रहर्षिणी नाम भवति । सा किंभूता ? त्रिदशयतिः त्रिभिर्दशभिश्च वर्णैर्यतिर्यस्या इति विग्रहः । तद्यथा,—

मगणः नगणः जगणः रगणः गु० मगणः नगणः जगणः रगणः गु०

सौभाग्यं रिपुविजयोन्नतिश्च षष्ठे वैवर्ण्यं कलहविधिश्च सप्तमे ज्ञे ।
मृत्युस्थे सुतजयभोगवस्तुलाभो नैपुण्यं भवति मति–प्रहर्षिणी च ॥ २ ॥

---

* 'जीवसे' इति पाठन्तरम् ।

चतुर्ग्रहैर्यति रुचिरा जभौ स्जगाः ॥ ३ ॥
वेदै रन्ध्रैर्म्तौ यसगा मत्तमयूरम् ॥ ४ ॥
यमौ रौ विख्याता चञ्चरीकावली गः* ॥ ५ ॥

जश्च भश्च जभौ स् च जश्च गश्च स्जगाः । जगणभगणौ सगणजगणगुरवश्च यदा स्युः । तदा इह छन्दसि रुचिरा नाम स्यात् । अस्य वृत्तस्य चतुर्ग्रहैः चतुर्भिर्नवभिश्च वर्णैर्यतिः स्यात् । तद्यथा,—

जगणः भगणः सगणः जगणः गु० जगणः भगणः सगणः जगणः गु०

समुल्लसत्तुरगतरङ्गसङ्गतैः प्रमन्थनोऽमररिपुवाहिनीपतेः ।
श्रियं महाभुजगवपुर्गुणैर्भरन् भवद्भुजो रणभुवि मन्थरायते ॥ ३ ॥

म् च तश्च म्तौ यश्च सश्च गश्च यसगाः । मगणतगणौ यगणसगणगुरवश्च चेत् । तदा मत्तमयूरं नाम स्यात् । अस्य वृत्तस्य वेदै रन्ध्रैः चतुर्भिर्नवभिश्च वर्णैर्यतिर्भवेत् । तद्यथा,—

मगणः तगणः यगणः सगणः गु०

विद्युन्नद्धाः सेन्द्रधनुर्द्योतितदेहा
†वातोद्धूताः श्वेतबलाकास्थिकचिह्नाः ।
एते मेघा गर्जितगम्भीरनिनादैः
प्रावृट्कालं मत्तमयूराः कथयन्ति ॥ ४ ॥

यश्च मश्च यमौ । रश्च रश्च राविल्येकशेषः । गः गुरुः । यगणमगणौ रगणद्वयं गुरुरेकश्च चेत् । तदा चञ्चरीकावली ख्याता चञ्चरीकावलीति नाम्ना प्रसिद्धा । तद्यथा,—

यगणः मगणः रगणः रगणः गु०

वसन्ते वासन्तीपल्लवोल्लङ्घलीला
भ्रमद्भृङ्गक्रीडां काङ्क्षमाणात्र यान्ती ।
नवामालीपुष्पोद्भूतसीधुप्रमत्ता
हरत्येषा चित्तं चञ्चरीकावली मे ॥ ५ ॥

सश्च जश्च सश्च सजसाः जश्च गश्च जगौ सगणजगणसगणजगणगुरवश्चेत् । तदा मञ्जुभाषिणी नाम भवति । तद्यथा,—

* "मञ्जरीकावली" ति नामान्तरम्। † "वातोद्धूताः श्वेतबलाकास्तिकचिह्नाः" इति पाठान्तरम्।

सजसा जगौ भवति मञ्जुभाषिणी* ॥ ६ ॥
ननतरगुरुभिश्चन्द्रिकाश्वषड्भिः ॥ ७ ॥

---

१४ अथ शक्कर्याम् १६३८४
म्तौ न्सौ गावक्षग्रहविरतिरसम्बाधा ॥ १ ॥

---

सगणः जगणः सगणः जगणः गु०

इभकुम्भतुङ्गघटिते † तरेतर-
स्तनभारदूरविनिवारितोदराः।
परिफुल्लगण्डफलकाः परस्परं
परिरेभिरे कुकुरकौरवस्त्रियः ॥ ६ ॥

नश्च नश्च तश्च रश्च गुरुश्च ननतरगुरवः। तैर्नगणद्वयतगणरगणगुरुभिश्चन्द्रिका नाम स्यात्। अस्य वृत्तस्य अश्वषड्भिः सप्तभिः षड्भिर्वर्णैर्यतिर्भवेत्। तद्यथा,—

नगणः नगणः तगणः रगणः गु०

अयि शिशिरकरो माममन्दमुद्य-
त्तव सखि! वदनं वीक्ष्य लज्जयेव।
प्रहरति तिमिरं केशपाशबुद्ध्या
मदयति मदनं त्वां प्रहर्तुमुच्चैः ॥ ७ ॥

शक्कर्यामुदाहरति।

म् च तश्च म्तौ न् च सश्च न्सौ। गश्च गश्च गावित्येकशेषः। मगणतगणौ नगणसगणौ गुरुद्वयं च यदि असम्बाधा नाम स्यात्। इयं कीदृशी? अक्षग्रहविरतिः अक्षैः पञ्चभिः ग्रहैः नवभिश्च वर्णैर्विरतिर्यतिर्यस्याः सा तथोक्ता। तद्यथा,—

---

मगणः तगणः नगणः. सगणः गु०गु०

स्कन्दं सानन्दं प्रणमत सततं यूयं
धर्मश्चार्थश्च प्रभवति भवतां नित्यम्।
शास्त्रव्याख्याने प्रसरति विशदा बुद्धिः
शक्ता व्याकर्तुं स्फुरति जगति सामर्थ्यम् ॥ १ ॥

नश्च नश्च रश्च सश्च लघुश्च गश्च ननरसलघुगाः। तैर्नगणद्वयरगणसगणलघुगुरुभिः अपराजिता नाम स्यात्। अस्य वृत्तस्य स्वरैः सप्तभिर्वर्णैर्यतिः स्यात्। तद्यथा,—

---

* "सुनन्दिनी"ति नामान्तरम्। † 'कठिने'ति पाठान्तरम्।

ननरसलघुगैः स्वरैरपराजिता ॥ २ ॥
ननभनलगिति प्रहरणकलिका ॥ ३ ॥
उक्तं वसन्ततिलकं तभजा जगौ गः ॥ ४ ॥
सिंहोन्नतेति गदिता मुनिकाश्यपेन* ॥ ५ ॥

नगणः नगणः रगणः सगणः ल०गु०

भुवनपरिसरान्तरालनिरन्तरं
तिमिरमविकलं महोनिधिरुद्गतः ।
विवृतदिनमुखं पिबन्निव भासते
कलश इवाखिलं जलधेः पयः ॥ २ ॥

नश्च नश्च भश्च नश्च लश्च ग् च ननभनलग् इति समाहारे नपुंसकम् । नगणद्वय-भगणनगण लघुगुरुभिः इति इयं प्रहरणकलिका नाम स्यात् । तद्यथा,—

नगणः नगणः भगणः नगणः ल०गु०

सरसिजवदनं कुवलयनयनं
मधुमुरमथनं कलिमलदहनम् ।
हरिमतिसदयं कृतभवविजयं
प्रणमातमभयं सकलदमलयम् ॥ ३ ॥

तश्च भश्च जश्च तभजाः । जश्च गश्च जगौ गः गुरुः । तगणभगणौ जगणगुरु-द्वयं च चेत् तदा वसन्ततिलकं वसन्ततिलकमिति नाम्ना उक्तं कथितम् । तद्यथा,—

तगणः भगणः जगणः जगणः गु०गु०

कर्पूरपूरपरिपूरितनागवल्ली-
कस्तूरिकापरिमलोज्ज्वलपूगपूगैः ।
सम्भावयत्यनुदिनं निवहं कवीनां
मौर्यान्वयो विजयबाहुमुनिर्मनीषी ॥ ४ ॥

मुनिश्चासौ काश्यपश्चेति मुनिकाश्यपः । तेन काश्यपेन मुनिना इदं वसन्ततिलकं सिंहोन्नतेति नाम्ना गदिता कथिता ॥ ५ ॥

भश्च जश्च सश्च नश्च भजसनाः । तैर्भगणजगणसगणनगणैः सगुरुयुग्मैः गुरुद्वयस-हितैः इन्दुवदना नाम स्यात् । तद्यथा,—

* मुद्रितवृत्तरत्नाकरे "उद्धर्षिणीयमुदिता मुनिसैतवेन" "रामेण सेयमुदिता मधुमाधवी"ति द्वे नामे अपि दृश्येते ।

इन्दुवदना भजसनैः सगुरुयुग्मैः ॥ ६ ॥
द्विः सप्तच्छिदलोला म्सौ म्भौ गौ चरणे चेत् ॥७॥

---

१५ अथातिशक्वर्याम् ३२७६८
द्विहतहयलघुरथगिति शशिकला ॥ १ ॥

भगणः जगणः सगणः नगणः गु० गु०

सागर ! जडाशयतया त्वमसि हीनः
केवलमितोसि वपुषैवमभिमानः ।
श्रीमणिभयामृतधनाद्यपहरन्हो
रक्षितुमपायविचयस्तव हि नासीत् ॥ ६ ॥

म् च सश्च म्सौ म् च भश्च म्भौ । गश्च गश्च गावित्येकशेषः । मगणसगणौ मगणभगणौ गुरुद्वयं च चरणे पादे चेत् । तदा अलोला नाम स्यात् । इयं कीदृशी ? द्विस्सप्तच्छित् छेदनं छिदिति सम्पादादितत्वात् भावे क्विप्रत्ययः । सप्तभिश्च छित् सप्तभिश्च छित् द्विर्द्विवारं यथा स्यात् द्विस्सप्तच्छिच्छेदो यस्या इति बहुव्रीहिः । सप्तभिः सप्तभिर्वर्णैर्यतिर्भवतीत्यर्थः । तद्यथा,—

मगणः सगणः मगणः भगणः गु० गु०

लक्ष्मीः सुन्दरि ! लोला लोलं यौवनमेत-
ल्लोलं चायुरिदं ते सर्वं विद्धि सुलोलम् ।
पापं दुर्गतिहेतुस्तस्मान्मुञ्च सदा त-
द्धर्मं स्वर्गनिदानं यत्नादेतमुपेहि ॥ ७ ॥

---

अतिशक्वर्यामुदाहरति । इति एषा शशिकला । किंविशिष्टा ? द्विहतहयलघुः द्विहता द्विर्गुणिता हयलघवः सप्तलघुवर्णा यस्याः सा तथोक्ता । अथ अनन्तरम् ग् गुरुः । चतुर्दशलघुभिरेकेण गुरुणा च शशिकला नाम भवति । तद्यथा,—

ल० १४ गु०

त्रिदशगुरुगिरिशिरसि वसति च या
पिबति यदमृतममरकुलमखिलम् ।
विकचकुमुदवनमुदमवति च सा
हरतु तव दुरितमनघशशिकला ॥ १ ॥

स्रगिति भवति रसनवकयतिरियम् ॥ २ ॥
वसुमुनियतिरिह मणिगणकिरणः ॥ ३ ॥
ननमयययुतेयं मालिनी भोगिलोकैः ॥ ४ ॥

रसनवकयतिः रसैः षड्भिः नवकैः नवभिश्च वर्णैर्यतिश्चेत् । तदा इयं शशिकला स्रगिति भवति स्रग् इति नाम्ना स्यात् । तद्यथा,—

ल० १४　गु०

खरतरशरविनिहतदशवदनः
स जयति गुरुभवभयचयशमनः ।
खगपगनगधरफणधरशयनः
परपदकरवरसरसिजनयनः ॥ २ ॥

इह शशिकलायाम् वसुमुनियतिः वसुभिरष्टाभिः मुनिभिः सप्तभिश्च वर्णैर्यतिश्चेत् । तदा मणिगणकिरणो नाम स्यात् । तद्यथा,—

ल० १४　गु०

अविरतममृतदमितमतिसुखदं
सुरनरमुनिगणकृतबहुशरणम् ।
दशबलपदयुगमपगतकलुषं
प्रभवति कुशलकृदनुपमपुरुषः ॥ ३ ॥

नश्च नश्च मश्च यश्च यश्च ननमययाः । तैर्नगणद्वयमगणयगणद्वयैर्युता युक्ता इयं मालिनी नाम स्यात् । अस्याः भोगिलोकैः भोगिभिरष्टभिः लोकैः सप्तभिश्च वर्णैर्यतिः स्यात् । तद्यथा,—

नगणः　नगणः　मगणः　यगणः　यगणः

अथ सललितयोषिद्भ्रूलताचारुशृङ्गं
रतिवलयपदाङ्के चापमासज्य कण्ठे ।
सहचरमधुहस्ते न्यस्तचूताङ्कुरास्त्रं
शतमखमुपतस्थौ प्राञ्जलिः पुष्पकेतुः ॥ ४ ॥

नश्च जश्च नजौ भश्च जश्च भजौ नगणजगणौ भगणजगणौ रसहितौ रगणयुक्तौ चेत् । तदा प्रभद्रकं नाम भवति । एतदेव केचित् सुकेशरमिति ब्रुवते । तद्यथा,—

भवति नजौ भजौ रसहितौ प्रभद्रकम् ॥ ५ ॥
सजना नयौ शरदशयतिरतिरेखा* ॥ ६ ॥
म्रौ म्यौ यान्तौ भवेतां सप्ताष्टभिश्चन्द्रलेखा ॥ ७ ॥

---

नगणः जगणः भगणः जगणः रगणः

अमरतरुर्यदीयमनिशं विहारितं
प्रकरमवेक्ष्य तु स्वयमुपैति लाघवम् ।
कविकुमुदप्रबोधहिमदीधितिप्रभो
जयति सुखं पराक्रमभुजो महीपतिः ॥ ५ ॥

सश्च जश्च नश्च सजनाः । नश्च यश्च नयौ सगणजगणनगणद्वयं यगणश्च चेत् । तदा अतिरेखा नाम स्यात् । एषा कीदृशी ? शरदशयतिः शरैः पञ्चभिः दशभिश्च वर्णैर्यतिर्यस्या इत्यन्यपदार्थसमासः । तद्यथा,—

सगणः जगणः नगणः नगणः यगणः

यदि कोपिनी प्रभवसि मदुपरि कान्ते !
दृढबन्धनं घटय भुजलतिकया मे ।
सहसा कुरु प्रखरनयनशरघातं
रदनच्छदावथ दश सुमुखि ! यथेच्छम् ॥ ६ ॥

म् च रश्च म्रौ म् च यश्च म्यौ । मगणरगणौ मगणयगणौ च यान्तौ यगणावसानौ यदि भवेताम् । तदा चन्द्रलेखा नाम स्यात् । एतस्याः सप्ताष्टभैः सप्तभिरष्टभिश्च वर्णैर्यतिः स्यात् । तद्यथा,—

मगणः रगणः मगणः यगणः यगणः

मांसग्रन्थौ स्तनौ ते वक्त्रं च लालाविलं स्या-
न्मूत्रक्लिन्ना च योनिर्देहस्तथैवापवित्रः ।
ब्रूषे मिथ्यैव वाचं निन्द्यं च कार्यं करोषि
प्रायः पापाकरा त्वं कस्माद्भवेचन्द्रलेखा ॥ ७ ॥

---

* अस्या एलेति नामान्तरम् ।

## १६ अथाष्टौ ६५५३६

**श्रौ त्रिनगाः स्वराः खमृषभगजविलसितम् ॥ १ ॥**
**नजभजतैः सदा भवति वाणिनी गान्वितैः ॥ २ ॥**

---

## १७ अथात्यष्टौ १३१०७२

**रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी ॥ १ ॥**

---

अष्ट्यामुदाहरति । भ् च रश्च श्रौ नश्च नश्च नश्च नाः त्रयश्च नाश्चेति त्रिनाः गः गुरुः त्रिनाश्च गश्चेति त्रिनगाः । भगणरगणौ नगणत्रयं गुरुरेकश्च चेत् । तदार्षभगजविलसितं नाम स्यात् । एतस्य वृत्तस्य स्वराः खम् स्वराः सप्त खं नव सप्तभिर्नवभिर्वर्णैर्यतिर्भवतीत्यर्थः । तद्यथा,—

भगणः रगणः नगणः नगणः नगणः गु०

**कोहमहं च कस्य कथमिह वसतिरियं**
**का जननी पिता च मम भवति जगति कः ।**
**के सुहृदः प्रयामि कुह पुनरपि सकलं**
**धान्यधनं विहाय जिन जिन किमिदमहो ॥ १ ॥**

नश्च जश्च भश्च जश्च तश्च नजभजताः तैर्नगणजगणभगणजगणतगणैः गान्वितैः गुरुसहितैः सदा सर्वदा वाणिनी नाम भवति । तद्यथा,—

नगणः जगणः भगणः जगणः तगणः गु०

**दशनमृणालनालदलदन्तुरं दन्तिनां**
**दलितनिपातितश्रवणपद्मिनीकर्णिकम्**
**कलुषितलोहिताम्बुजितवीरहंसाम्बुजं**
**रिपुरणभूसरस्तव भुजेन संक्षोभितम् ॥ २ ॥**

---

अत्यष्ट्यामुदाहरति । यश्च मश्च नश्च सश्च भश्च लश्च यमनसभलाः गः गुरुः यगणमगणनगणसगणभगणा लघुगुरू च चेत् । तदा शिखरिणी नाम स्यात् । इयं कीदृशी ? रसै रुद्रैश्छिन्ना रसैः षड्भिः रुद्रैरेकादशभिश्च वर्णैः छिन्ना *अवधीकृता । यतिमतीत्यर्थः । तद्यथा,—

---

* "वैधीकृता."

जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः ॥ २ ॥
दिङ्मुनि वंशपत्रपतितं भरनभनलगैः ॥ ३ ॥
रसयुगहयैन्सौं म्रौ स्लौ गो यदा हरिणी तदा ॥ ४ ॥

यगणः मगणः नगणः सगणः भगणः ल०गु०

दुरालोकस्तोकस्तबकनवकाशोकलतिका-
विकाशः कासारोपवनपवनोपि व्यथयति ।
अपि ग्राम्यद् हीही * रणितरमणीयानमुकुल-
प्रसू चूतानां ( सा ) सखि ! शिखरणीयं सुखयति ॥ १ ॥

जश्च सश्च जसौ । जश्च सश्च यश्च लश्च जसयलाः । गुरुरिति प्रसिद्धः । जगणसगणौ जगणसगणयगणा लघुगुरू च चेत् । तदा पृथ्वी नाम स्यात् । एषा किंविशिष्टा ? वसुग्रहयतिः वसुभिरष्टभिः ग्रहैर्नवभिश्च वर्णैर्यतिर्यस्या इति बहुव्रीहिः । तद्यथा,—

जगणः सगणः जगणः सगणः यगणःल०गु०

न चन्दनजलच्छटा नवविचित्ररत्नस्रजो
न चन्द्रकिरणाङ्कुरा नवहिमोत्तरा वायवः ।
व्रजन्ति कमनीयतां शिशिरसङ्गमे देहिनां
भवेन्नहि जडात्मनां गुणवदाश्रयः प्रीतये ॥ २ ॥

भश्च रश्च नश्च भश्च नश्च लश्च गश्च भरनभनलगाः तैर्भगणरगणनगणभगणनगण-लघुगुरुभिर्वंशपत्रपतितं †नाम स्यात् । इदं किंभूतम् ? दिङ्मुनि दिक् दश मुनि सप्त यतेः स्थानत्वेन यस्मिंस्तत् तथोक्तम् । तद्यथा,—

भगणः रगणः नगणः भगणः नगणःल०गु०

यत्र शरीरबिम्बमुदितं निजममलतले
सेर्ष्यमवेक्षितं कमलया परयुवतिधिया ।
कार्ष्ण्यमवक्षिपन् भगवतः समविधिरिव यो
भाति हृदि स्थितो मुरभिदः स मणिरवतु वः ॥ ३ ॥

न् च सश्च न्सौ म् च रश्च म्रौ स् च लश्च स्लौ गः गुरुः नगणसगणमगणरगण-सगणा लघुगुरू च यदा तदाहरिणी नाम स्यात् । एतस्य वृत्तस्य रसयुगहयैः रसैः षड्भिः युगैश्चतुर्भिः हयैः सप्तभिश्च वर्णैर्यतिः स्यात् । तद्यथा,—

---

* 'गो गो' क्वचित् । † एतदेव मणिमरीचीति नाम्ना केचिदाहुः ।

मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत् ॥ ५ ॥
हयदशभिर्नजौ भजजला गुरु तत्कुटकम् ॥ ६ ॥
मुनिगुहकार्णवैः कृतयतिं वद कोकिलकम् ॥ ७ ॥

---

नगणः सगणः मगणः रगणः सगणः ल० गु०

गणयति गुणग्रामं भ्रामं भ्रमादपि नेहते
वहति परितोषं दोषं वा विमुञ्चति दूरतः ।
युवतिषु बलात्कृष्णे कृष्णे विहारिणि मां विना
पुनरपि मनो वामं कामं करोति करोमि किम् ॥ ४ ॥

म् च भश्च म्भौ नश्च तश्च नतौ मगणभगणौ नगणतगणौ तात्तगणात् परतो गुरू च चेत्। तदा मन्दाक्रान्ता नाम स्यात्। अस्य वृत्तस्य जलधिषडगैः जलधिभिश्चतुर्भिः षड्भिः अगैः सप्तभिश्च वर्णैर्यतिः स्यात्। तद्यथा,—

मगणः भगणः नगणः तगणः तगणः गु० गु०

बाला चेयं मृदुरियमिति त्यज्यतामत्र शङ्का
दृष्टा काचिद्भ्रमरहरणा मञ्जरी भिद्यमाना ।
तस्मादेषा रहसि भवता निर्दयं पीडनीया
मन्दाक्रान्ता विसृजति रसं नेक्षुयष्टिं समग्रम् ॥ ५ ॥

नश्च जश्च नजौ भश्च जश्च जश्च लश्च भजजलाः। गुरु इति नपुंसकमक्षरवाचित्वात्। नगणजगणभगणजगणद्वयं लघुगुरू यदि। तत्कुटकं नाम स्यात्। अस्य वृत्तस्य हयदशभिः हयैः सप्तभिर्दशभिश्च वर्णैर्यतिर्भवेत्। तद्यथा,—

नगणः जगणः भगणः जगणः जगणः ल० गु०

दशविधधर्मसु प्रतिदिनं चरतः कृपया
सरसमनास्त्वसौ रिपुवधूवदनाब्जशशी ।
गुणगणभूषणः सुगतशासनवृद्धिकरः
सकलकलाकृतिर्गुरुपराक्रमबाहुनृपः ॥ ६ ॥

मुनयः सप्त गुहस्य स्कन्दस्य कानि मस्तकानि गुहकानि षडित्यर्थः। अर्णवाश्चत्वारः मुनयश्च गुहकानि च अर्णवाश्च मुनिगुहकार्णवाः। तैः कृतयतिं कोकिलकं वद तत्कुटकमेव यतिभेदात् कोकिलकं कथय हे छात्रेति शेषः। तद्यथा,—

१८ अथ धृतौ २६२१४४

स्याद्भूतर्त्वश्वैः कुसुमितलतावेल्लिता म्तौ नयौ यौ ॥ १ ॥

*सौं जजौ भरसंयुतौ करिबाणकैर्हरनर्तकम् ॥ २ ॥

नगणः जगणः भगणः जगणः जगणः ल०गु०

भवति किमीश्वरो मुररिपुः किमु किंच विधिः
किमु धनदोऽथवा रतिपतिः किमु जम्भरिपुः।
न स न स नैव सोयमपि नो न स नायमहो
वसति सतां मुदे भुवि पराक्रमबाहुनृपः ॥ ७ ॥

---

धृतावुदाहरति।

म् च तश्च म्तौ नश्च यश्च नयौ यश्च यश्च यावित्येकशेषः। मगणतगणनगणयगण-त्रयं च यदि। तदा कुसुमितलतावेल्लिता नाम स्यात्। अमुष्य वृत्तस्य भूतर्त्वश्वैः भूतैः पञ्चभिः ऋतुभिः षड्भिः अश्वैः सप्तभिर्यतिर्भवेत्। तद्यथा,—

मगणः तगणः नगणः यगणः यगणः यगणः

शोभामाधत्ते मधुकरवधूकण्ठगीताभिरामे
प्रारम्भे माद्यद्विहगविरुता नोद्य जाते च जाते।
पुष्पालङ्कारा निपुणपवनाचार्यदत्तोपदेशा
लास्यं तन्वाना वनतरलतायोषिदारामरङ्गे ॥ १ ॥

र् च सश्च सौं जश्च जश्च जजौ भरसंयुतौ भश्च रश्च भरौ ताभ्यां संयुतौ सहितौ। रगणसगणजगणद्वयभगणरगणाश्च चेत्। तदा हरनर्तकं नाम स्यात्। एतस्य वृत्तस्य करिबाणकैः करिभिरष्टभिः बाणकैः पञ्चभिश्च वर्णैर्यतिः स्यात्। पादान्तयतिस्त्वनुक्त-सिद्धैव। तद्यथा,—

रगणः सगणः जगणः जगणः भगणः रगणः

श्रीपराक्रमबाहुदेव महीपते! महतां गते
सङ्गते सति सङ्गरं त्वयि केन वापि किमग्रतः।
पाणिनासिररेः शिरोप्यसिना मुनेरिव भीतया
त्वं तयापि लसद्यशो यशसा तथा भुवनत्रयम् ॥ २ ॥

---

* "सौं जजौ भरसंयुतौ करिबाणखैर्हरनर्तन"मिति पुस्तकान्तरपाठः।

कथितमिह ननौ ररौ चेद्ररौ सिंहविक्रीडितम् ॥ ३ ॥

---

१९ अथातिधृतौ ५२४२८८

रसर्त्वश्वैर्य्मौ न्सौ ररगुरुयुतौ मेघविस्फूर्जिता स्यात् ॥ १ ॥

सूर्याश्वैर्मसजाः स्तताः सगुरवः शार्दूलविक्रीडितम् ॥ २ ॥

---

नश्च नश्च ननौ रश्च रश्च ररौ । पुनरपि रश्च रश्च ररौ । नगणद्वयं रगणचतुष्टयं च चेत् । तदा इह छन्दसि* सिंहविक्रीडितं नाम कथितम् । तद्यथा,—

नगणः नगणः रगणः रगणः रगणः रगणः

रघुपतिरपि जातवेदोविशुद्धां प्रगृह्य प्रियां
प्रियसुहृदि विभीषणे संक्रमय्य श्रियं वैरिणः ।
रविसुतसहितेन तेनानुयातः ससौमित्रिणा
भुजविजितविमानरत्नाधिरूढः प्रतस्थे पुरीम् ॥ ३ ॥

अतिधृत्यामुदाहरति । य् च मश्च य्मौ न् च सश्च न्सौ यगणमगणौ नगणसगणौ । रश्च रश्च गुरुश्च ररगुरवः । तैर्युतौ सहितौ रगणद्वयगुरुयुक्तौ च चेत् । तदा मेघविस्फूर्जिता नाम स्यात् । अस्य वृत्तस्य रसर्त्वश्वैः रसैः षड्भिः ऋतुभिः अश्वैः सप्तभिश्च वर्णैर्यतिर्भवति । तद्यथा,—

---

यगणः मगणः नगणः सगणः रगणः रगणः गु०

श्रिया जुष्टं दिव्यैः सपटहरवैरन्वितं पुष्पवर्षै-
र्वपुष्टश्चैद्यस्य क्षणमृषिगणैः स्तूयमानन्निरीय ।
प्रकाशेनाकाशे दिनकरकरान्विक्षिपद्विस्मिताक्षै-
र्नरेन्द्रैरौपेन्द्रैर्वपुरथ विशुद्धामवीक्षां बभूवे ॥ १ ॥

मश्च सश्च जश्च मसजाः स् च तश्च तश्च स्तताः मगणसगणजगणसगणतगणतगणाः सगुरवः गुरुसहिताश्च चेत् । तदा शार्दूलविक्रीडितं नाम स्यात् । अस्य वृत्तस्य सूर्याश्वैः सूर्यैर्द्वादशभिः अश्वैः सप्तभिर्वर्णैर्यतिर्भवेत् । तद्यथा,—

मगणः सगणः जगणः सगणः तगणः तगणः गु०

अक्षं विक्षिपति ध्वजं त्रुटयते मुष्णाति नद्धं युगं
चक्रं चूर्णयति क्षिणोति तुरगान् रक्षःपतेः पक्षिराट् ।
रुन्धे गर्जति तर्जयत्यभिभवत्यालम्बते ताडय-
त्याकर्षत्यपकर्षति प्रचलति न्यञ्चत्युदञ्चत्यपि ॥ २ ॥

---

* नाराचमिति नामान्तरम् ।

२० अथ कृतौ १०४८५७६

*सभरा नम्य्लगिति त्रयोदशयतिर्मत्तेभविक्रीडितम् ॥ १ ॥
ज्ञेया सप्ताश्वषड्भिर्मरभनययुतौ भ्लौ गः सुवदना ॥ २ ॥
त्रीरजौ गलौ भवेदिहेदृशेन लक्षणेन वृत्तनाम ॥ ३ ॥

कृतावुदाहरति। सश्च भश्च रश्च सभराः। नश्च म् च य् च लश्च गश्च नम्य्लग् समाहारे नपुंसकम्। सगणभगणरगणनगणमगणयगणाः लघुगुरू च चेत्। तदा इह इयम् मत्तेभविक्रीडितं नाम स्यात्। अस्य वृत्तस्य त्रयोदशयतिस्त्रयोदशभिर्वर्णैर्यतिर्भवति। तद्यथा,—

सगणः भगणः रगणः नगणः मगणः यगणः ल०गु०

सुमनः-सद्मनि केचिदाहुरमृतं केचित्सुतालिङ्गने
रमणीनामधरेषु केपि कतिचिच्चन्द्रे निधौ वापरे।
सुमते भूमिपते पराक्रमभुज! त्वत्के कटाक्षे कृपा-
भरिते सम्प्रति तिष्ठतीति सुधियां बन्धो वयं ब्रूमहे ॥ १ ॥

मश्च रश्च भश्च नश्च यश्च मरभनयाः तैर्मगणरगणभगणनगणयगणैर्युतौ सहितौ। भ् च लश्च भ्लौ भगणलघू। गः गुरुरेकश्च यदि। तदा सुवदना नाम ज्ञेया ज्ञातव्या। अस्य वृत्तस्य सप्ताश्वषड्भिः सप्तभिः अश्वैश्च सप्तभिः षड्भिश्च वर्णैर्यतिर्भवेत्। तद्यथा,—

मगणः रगणः भगणः नगणः यगणः भगणः ल०गु०

दूती त्वत्कीर्तिरेषा तव मगधपते! तुभ्यं नृप ददौ
वैधात्रं सत्कलत्रं मधुमथनवधूं चानीय झटिति।
इत्याकर्ण्यैश्वरोऽसौ वपुषि भगवतीं धत्ते ध्रुवमभू-
दिन्द्रो भूरीक्षणोऽथ व्रतमनुपयमं स्कन्दो भजदयम् ॥ २ ॥

रश्च जश्च रजौ त्रिवारं रजौ त्रिरजौ गश्च लश्च गलौ। रगणजगणौ रगणजगणौ रगणजगणौ गुरुलघू च चेत्। तदा इह छन्दसि ईदृशेन उक्तरूपेण लक्षणेन वृत्तनाम भवेत्। वृत्तमिति नाम यस्येति समासः। तद्यथा,—

रगणः जगणः रगणः जगणः रगणः जगणः गु०ल०

यत्पदे पदे समुद्गतेषु फुल्लपङ्कजेष्वपङ्कजेषु
भूमिदेवताप्रसारितेष्विवायतेषु पाणिसम्पुटेषु।
सञ्चरन्विराजि राजहंसलीलया प्रजाहितोदयाय
तत्सुरेन्द्रवन्दितं मुनीन्द्रपादयुग्ममस्तु वः शिवाय ॥ ३ ॥

* "सभरान्मौ यलगास्त्रयोदशयतिर्मत्तेभविक्रीडित"मिति पुस्तकान्तरपाठः।

**सजजा भरौ सलगाश्च चेदुदितं तदा प्रमदाननम् ॥ ४ ॥**

---

**२१ अथ प्रकृतौ २०९७१५५**

**म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेऽयं ॥ १ ॥**

**भौ भभभाश्च भरौ यदि कीर्तय पुत्रक ! मत्तविलासिनीम् ॥२॥**

---

सश्च जश्च जश्च सजजाः भश्च रश्च भरौ सश्च लश्च गश्च सलगाः सगणजगणद्वयं भगणरगणसगणाः लघुगुरू च चेत् । तदा प्रमदाननमुदितं प्रमदाननमिति नाम्ना कथितम् । तद्यथा,—

सगणः जगणः जगणः भगणः रगणः सगणःल०गु०

**शरदिन्दुकुन्द तुषारहार पवीर पारद सुन्दरं**
**जपमालिकामणिपद्मपाणिमशेषलोकहितैषिणम् ।**
**जिनमौलिमादिगुरुं जटामकुटादिभूषणभूषितं**
**प्रणमामि सम्प्रति सम्पदामवलोकितेश्वरमीश्वरम् ॥ ४ ॥**

---

प्रकृतावुदाहरति ।

म् च रश्च भ् च नश्च म्रभ्नाः तैर्मगणरगणभगणनगणैः यानां त्रयेण यगणानां त्रयेण स्रग्धरा नाम कीर्तिता कथिता । किं भूता ? त्रिमुनियतियुता मुनयः सप्त त्रयश्च ते मुनयश्चेति त्रिमुनयः तैर्यतिः त्रिमुनियतिः ताभिर्युता सप्तभिः सप्तभिः सप्तभिर्यतीत्यर्थः । तद्यथा,—

मगणः रगणः भगणः नगणः यगणः यगणः यगणः

**उद्यत्कोटिग्रहेशारुणवपुरनघं सन्दधानं चतुर्भि-**
**र्दोर्भिः पाशं कुशेष्वासनमपि सशरं सेमृवक्रं त्रिनेत्रम् ।**
**शान्तं सर्वज्ञमाद्यं वरदमविरतं वन्द्यमानं सुरेन्द्रै**
**रत्नालङ्कारदिव्यावयवि कुचभरोद्धारि वस्तु प्रपद्ये ॥ १ ॥**

भश्च भश्च भावित्येकशेषः । भश्च भश्च भश्च भभभाः भश्च रश्च भरौ । भगणषट् रगणश्च यदि । तदा अये पुत्रक ! मत्तविलासिनीं कीर्तय नाम्ना मत्तविलासिनीति वद । तद्यथा,—

## २२ आकृतौ ४१९४३०४

श्रौ नरना रनावथ गुरुर्दिगर्कविरमं प्रभद्रकमिदम् ॥ ३ ॥

## २३ विकृतौ ८३८८६०८

यदिह नजौ भजौ भजभलग् तदाश्वललितं हरार्कयतिमत् ॥ ४ ॥

भगणः भगणः भगणः भगणः भगणः भगणः रगणः

मञ्जुचलन्मणिशिञ्जितनूपुरमञ्जितलोचनपङ्कजं
गण्डलसन्मणिकुण्डलमुल्ललिताभ्रविलोलितकुन्तलम् ।
इन्दुरुचिस्फुरकुन्दगुलुच्छसितच्छविभासमनोहरं
कम्पयति स्ववपुर्मम या मनसा सह मत्तविलासिनी ॥ २ ॥

आकृतावुदाहरति ।

स् च रश्च श्रौ नश्च रश्च नश्च नरनाः रश्च नश्च रनौ भगणरगणौ नगणरगणनगणाः रगणनगणौ । अथ अनन्तरं गुरुरेकश्च चेत् । तदा इदं प्रभद्रकं नाम स्यात् । तत् किंभूतम् ? दिगर्कविरमं दिग्भिर्दशभिः अर्कैर्द्वादशभिर्विरमो विरामो यस्य तथोक्तम् । तद्यथा,—

भगणः रगणः नगणः रगणः नगणः रगणः नगणः गु०

प्राप्तमहोदयः प्रणयिभिर्धनैरसकृदात्तसारविभवः
सद्गुणरत्नभूरविकृतिस्थितिर्विपुलसत्त्वकायभरणः ।
दीप्तमहानलः सकलदिङ्मुखानुगततारशब्दविसर-
स्त्वं यदि वारिधे ! गुणनिधिः कुतस्तव भुजाग्रसङ्गतिरियम् ॥ ३ ॥

विकृतावुदाहरति । नश्च जश्च नजौ भश्च जश्च भजौ भश्च जश्च भश्च लश्च ग् च भजभलग् समाहारोऽयं द्वन्द्वः । व्यञ्जनान्तनपुंसकत्वात् सेर्लोपः । इह छन्दसि यदा यद्वृत्तं नगणजगणभगणजगणभगणजगणभगणा लघुगुरू च चेत् । तदा अश्वललितं नाम स्यात् । तत् कीदृक् ? हरार्कयति हरैरेकादशभिः अर्कैर्द्वादशभिश्च वर्णैर्यतिर्यस्य तत् तथोक्तम् । तद्यथा,—

नगणः जगणः भगणः जगणः भगणः जगणः भगणः ल० गु०

नहनभुजङ्गभोगवलयालवालरचनास्तदङ्गमनिजै-
र्घृणिभिरुपाहितोत्किसलयश्रियो विशदचन्द्रिकाकुसुमिताः ।
सुरसरिदम्बुसेकरतयस्तवाभिरतये जटावृततया
त्रिपुरभिदो भवन्तु हिमवत्सुतानयनभृङ्गविभ्रमभुवः ॥ ४ ॥

**मत्ताक्रीडा मौ त्नौ नौ नल्गिति भवति वसुशरदशयतियुता ॥ ५ ॥**
**भैरथ सप्तभिरत्र कृता गुरुणा गुरुणा च मयूरगतिः स्यात् ॥ ६ ॥**

---

**२४ संकृतौ १६७७७२१६**

**भूतमुनीनैर्यतिरिह भतनाः स्भौ भनयाश्च यदि भवति तन्वी ॥७॥**

---

मश्च मश्च मौ त् च नश्च त्नौ नश्च नश्च नौ नश्च ल् च नलौ ग् गुरुः । मगणद्वय-तगणनगणचतुष्टयं लघुगुरू च यदि तदा इह इयम् मत्ताक्रीडानाम भवति । किं-विशिष्टा ? वसुशरदशयतियुता वसवोष्टौ शराः पञ्च दश प्रसिद्धाः । वसवश्च शराश्च दश च वसुशरदश तैर्यतिः तया युता सहिता । तद्यथा,—

मगणः मगणः तगणः नगणः नगणः नगणः नगणःल०गु०

**नानाविद्याधारन्धीरं धरणिधरनिकर-युवतिजनलसत्-**
***सीमं नोद्यत्सिन्दूरौघादुदितपदकमलयुगलमविकलम् ।**
**धर्मे कर्मण्यासक्तं तन्नयविजितदनुजगुरुममरगुरु-**
**प्रख्यं वाग्भिर्वीरं पायादनवरतमवनिपतिमिह सुगतः ॥ ५ ॥**

भश्च भश्च भश्च भश्च भश्च भश्च भश्च भा इत्येकशेषः तैः सप्तभिर्भगणैः अथ अन-न्तरं गुरुणा गुरुणा च गुरुद्वयेन च कृता रचिता अत्र छन्दसि मयूरगतिर्नाम स्यात् । तद्यथा,—

भगणः भगणः भगणः भगणः भगणः भगणः भगणः गु०गु०

**स्वापविमोहितचेतसि वोढरि गूढनभो विवरे तिमिरौघे**
**गेहजनैरविकारमजानति गोपितबालवधूजनभावा ।**
**धीरमनोभवधीपरिदूरितभीरतिदूरपथन्निशि याऽस्मिन्**
**याति मयूरगतिस्तु तया किल कोपि नरो रमते गतशङ्कः ॥ ६ ॥**

---

संकृतावुदाहरति । भश्च तश्च नश्च भतनाः स् च भश्च स्भौ भश्च नश्च यश्च भनयाः । भगणतगणनगणसगणभगणभगणनगणयगणाश्च यदि स्युस्तदा तन्वी नाम भवति । इह अस्मिन् वृत्ते भूतमुनीनैः भूतैः पञ्चभिः मुनिभिः सप्तभिः इनैः सूर्यैर्द्वादशभिश्च वर्णैर्यतिः स्यात् । तद्यथा,—

* "सीमन्तोद्यत्"

२५ अतिकृतौ ३३५५४४३२

क्रौञ्चपदा भ्मौ स्भौ नननान्गाविषुशरवसुमुनिविरतिरिह भवेत्॥८॥

---

२६ उत्कृतौ ६७१०८८६४

वस्वीशाश्वच्छेदोपेतं ममतनयुगनरसलगैर्भुजङ्गविजृम्भितम् ॥ ९ ॥

भगणः तगणः नगणः सगणः भगणः भगणः नगणः यगणः

नीलतमाल-द्युतिविपुलतरं, दानवसैनिक-शरशतपातं
सङ्गतलक्ष्मी-स्तनगलितलसत्कुङ्कुमरागरचितनवसन्ध्यम् ।
मौक्तिकहारस्फुरदुडुनिकरं कौस्तुभरत्नशशिकिरणधौतं
प्रीतिविशेषं वितरतु नितरां शौरिभुजान्तरगगनतलं ते ॥ ७ ॥

---

अतिकृतावुदाहरति । भ् च मश्च भ्मौ स् च भश्च स्भौ नश्च नश्च नश्च नननाः न् च गश्च न्गौ भगणमगणौ सगणभगणौ नगणचतुष्टयं गुरुरेकश्च चेत् तदा इह छन्दसि क्रौञ्चपदा नाम भवेत् । किं भूता ? इषुभिः पञ्चभिः शरैः पञ्चभिः वसुभिरष्टभिः मुनिभिः सप्तभिर्वर्णैर्यतिर्यस्याः सा तथोक्ता । तद्यथा,—

भगणः मगणः सगणः भगणः नगणः नगणः नगणः नगणः गु०

मत्तगजेन्द्र व्यूहघनौघैः स्थगितसकलदिशि बहलकलकले
प्रोद्यतचापे सायकधारा प्रकरमुचि नमुचि-बलघनसमये ।
शान्तिमुपेते शान्तिविघातिन्यशिशिरकर इव शरदमधिगुणं
बोधिमवाप्योऽधिकशोभः शमयतु मुनिरिह तव दुरितमसौ ॥ ८ ॥

---

उत्कृतावुदाहरति । मश्च मश्च तश्च नयुगश्च नश्च रश्च सश्च लश्च गश्च ममतनयुगनरसलगाः । तैर्मगणद्वयतगणनगणत्रयरगणसगणलघुगुरुभिर्भुजङ्गविजृम्भितं नाम स्यात् । किं भूतम् ? वस्वीशाश्वच्छेदोपेतम् वसवोऽष्टौ ईशा एकादश अश्वाः सप्त वसवश्च ईशाश्च अश्वाश्च वस्वीशाश्वाः । तैश्छेदः यतिः तेनोपेतं युक्तम् । तद्यथा,—

मगणः मगणः तगणः नगणः नगणः नगणः रगणः सगणः ल० गु०

जन्मक्षीराम्भः-कल्लोलं बहुगदमकरपरिगतं दुरन्तदुरुत्तरं
संसाराकूपारं घोरं विकृतमरणमुख-वडवामुखान्तरसम्मुखम् ।
प्रज्ञामन्थेनामथ्नन्तः सदमृतविभवसमुदया मुदं विबुधा ययु-
र्मूढस्तस्मिन् क्लेशावृत्तभ्रमकुहरगहनपतितो जनः परिखिद्यते ॥ ९ ॥

**मो नाः षट् सगगिति यदि नवरसरसशरयतियुतमपवाहाख्यम्॥१०॥**

इति षड्विंशति छन्दांसि

---

## *२७ अथ दण्डकाः १३४२१७७२८

**यदिह नयुगलं ततः सप्तरेफास्तदा चण्डवृष्टिप्रयातो भवेद्दण्डकः॥११॥**

मः मगणः नश्च नश्च नश्च नश्च नश्च नश्च ना इत्येकशेषः । नगणाः षट् सश्च गश्च ग् च सगग् । समाहारे नपुंसकम् । सगणगुरुद्वयं च । इति एवं यदि तदा अपवाहाख्यं स्यात् अपवाह इति आख्या नाम यस्येति बहुव्रीहिः । एतत् किं भूतम्? नवरसरसशरयतियुतम् नवभिः रसैः षड्भिः पुनरपि रसैः षड्भिः शरैः पञ्चभिश्च वर्णैरुक्तक्रमेण या यतिः तया यत्या युतं सहितम् । तद्यथा,—

मगणः नगणः नगणः नगणः नगणः नगणः नगणः सगणःगु०गु०

**गोविन्दं गरुडगमनमनुपमगुणमसुरमथनमतिकारुण्यं**
**कंसारिं कुवलयदलशमुदधिशयनमनुगतजनसुमनोवृक्षम् ।**
**ब्रह्मेशप्रभृतिविबुधनिवहविनतचरणकमलकमलाजानिं**
**बिभ्राणं दशशतमुखमहिपतिमहमतिसिततनुमनिशं वन्दे ॥ १० ॥**

**इति छन्दसां षड्विंशतिः समाप्तः ॥**

---

अधुना दण्डकवृत्तं वक्तुमारभते । इह छन्दसि यन्नयुगलम् यन्नगणद्वयं ततः तस्मात् नयुगलात् परे सप्तरेफाः सप्तरगणाः यदा स्युः तदा अयं चण्डवृष्टिप्रयातो नाम दण्डको भवेत् । तद्यथा,—

न० न० र० र० र० र० र० र० र०

**तव हिमकरकाशकर्पूरकान्तागता कीर्तिरिन्दुं विजेतुं रुचा वै सदा**
**गगनमथ समं विगृह्यामुनामुं कुलं कीर्तिमन्वाययौ स्नातुमम्भोनिधिम् ।**
**कलशज-मुनिनापि यः प्रोज्झितोऽसौ निशम्येति सत्रापि तस्मादपि प्रागमत्**
**कमलभवकमण्डलुं शुद्धये श्रीपराक्रान्तिबाहो ! महीपालचूडामणे ! ॥ ११ ॥**

---

* उत्कृतेः षड्विंशत्यक्षरायाः समनन्तरं दण्डकस्य पाठात् सप्तविंशत्यक्षरत्वमेव युक्तम् । सर्वेषां छन्दसामेकैकाक्षरवृद्ध्या प्रवृत्तेरिति हलायुधवचनादिह सप्तविंशत्यङ्कं न्यस्तम् । तथैवेह वृत्तरत्नाकरसेतुकृतो भास्करस्य मतानुसारेण वृत्ताङ्कनियमनं च कृतमिति ज्ञातव्यम् ।

**प्रतिचरणविवृद्धरेफाः स्युरर्णार्णवव्यालजीमूतलीलाकरोद्दामशङ्खादयः**

चरणे चरणे प्रतिचरणम् तस्मिन् विवृद्धाः वृद्धिंगताः रेफाः रगणाः येषां ते विवृद्धरेफाः । अर्णार्णवव्यालजीमूतलीलाकरोद्दामशङ्खादयः स्युः । तदुक्तं भवति । नगणद्वयात् परतः अष्टौ रगणाश्चेत् अर्णोनाम दण्डकः । नव चेत् अर्णवो नाम दण्डकः । दश चेत् व्यालो नाम दण्डकः । एकादश चेत् जीमूतो नाम दण्डकः । द्वादश चेत् लीलाकरो नाम दण्डकः । त्रयोदश चेत् उद्दामो नाम दण्डकः । चतुर्दश चेत् शङ्खो नाम दण्डकः । आदिशब्दादेवान्येपि सिंहसमुद्रभुजङ्गाद्याः दण्डकाः प्रयोगानुसारेण द्रष्टव्याः* । तत्रार्णो यथा,—

न० न० र० र० र० र० र० र० र० र०

**प्रणतनरपतिस्फुरन्मौलिमालामहामूल्यमाणिक्यरश्मिच्छटारञ्जिताङ्घ्रे प्रभो**
**कुसुमपुरपते ! पराक्रान्तिबाहो ! पुरीषु द्विषां ते वनाली-तमिस्रासु वन्यो गजः ।**
**स्फटिकरचितभित्तिषु स्वीयबिम्बं समीक्ष्यान्यनागोयमित्याबिभेदाग्रदन्तैः क्रुधा**
**झटिति सपदि तेषु दन्तेषु दृष्ट्वा पुनर्हस्तिनीत्याशयानुप्रयाति स्मरार्तोद्धुतम् ॥**

अर्णवो यथा,—

न० न० र० र० र० र०

**दिनमणिकुलदीप ! दीपावलीदानसन्तानसं**

र० र० र० र० र०

**जातपुण्यप्रसूत ! स्फुरज्ज्योतिरस्ताखिल-**
**भ्रम ! विविधमहामहादानसन्तर्पिताशेषदे-**
**शागतब्राह्मणादेर्गुरो ! दानशौण्डाग्रणीः ।**
**हरिहरपरमेष्ठिषाण्मातुरेभाननादित्यस-**
**र्वग्रहाराधनाधूतकृत्स्नप्रजोपद्रव !**
**कृतचतुरपुरोहिताधिष्ठितेज्यक्रियाजालस-**
**म्पच्चतुर्वेदविद्यानिधे ! जीव लङ्कापते ! ॥**

---

* आदिपदात् पञ्चदशादिभिः रगणैर्घटितपादाः क्रमेण आराम सङ्ग्राम सुराम वैकुण्ठ सार कासार विसार संहार नीहार मन्दार केदार आसार सत्कार संस्कार माकन्द गोविन्द सानन्द सन्दोह आनन्द इत्येते ग्राह्या इति तर्कवाचस्पतिः ।

व्यालो यथा;—

न० न० र० र० र० र०

रणशिरसि कठोरदोर्दण्डखण्डी-कृताशेषच

र० र० र० र० र० र०

ण्डारिमुण्डावलीपिण्डदग्धामनुष्यस्वने भीषणे
प्रशमितरिपुवर्गमाविर्भवत्सद्यशोराशिमौ-
त्सुक्यसंवर्द्धितात्मीयबन्धुप्रसादं प्रसन्नाननम् ।
अशरणशरणप्रतीकारधौरेय ! राजन् ! परा
क्रान्तिबाहो ! द्विषद्राज्ञराहो ! भवन्तं विलोक्याधुना
विदधति दिवि साधुकारं महेन्द्रादयो देवता
वीर्यतुष्टास्तव न्याययुद्धैषिणः किंपुनर्मानवाः ॥

जीमूतो यथा,—

न० न० र० र० र० र० र०

स्वकठिनकरमुक्तनाराचभिन्नेभकुम्भस्थलध्वस्तमु-

र० र० र० र० र० र०

क्ताफले शोणिताम्भः-प्लवन्मत्तमातङ्गपङ्कच्छले
प्रचुरविलसदुत्पलस्वान्तपङ्केरुहोद्भासिरक्तस्रव-
न्तीशतालिङ्गिते भूरिनृत्यत्कबन्धे क्वचिद्बन्धुरे ।
सुरयुवतिसमागमे प्रेत्सुवीरव्रजाहङ्कृतिध्वान्तभी-
मे पयोधाविवाजिस्थले लूनपत्त्यश्वनागावली-
च्युतरुधिरकणेक्षितार्द्रैः कृपाणो बभौ ते यथायं जय-
श्रीपदालक्तकारञ्जितः श्रीपराक्रान्तिबाहोऽधिकम् ॥

लीलाकरो यथा,—

न० न० र० र० र० र० र०

विशद सुरसमूहनारायणो वैरिभूपान्धकारोष्णभा-

र० र० र० र० र० र० र०

नुः सपत्नाहिनागान्तको राजवैश्याभुजङ्गोरिभूतान्तकः

प्रखररिपुदशास्यरामो द्विषत्तारकस्कन्ददेवो विप-
क्षाघबुद्धोरिकालानलाम्भोधरो वैरिवृक्षावलीकुञ्जरः ।
अरिशिखरिदिवसपतिर्दस्युदावानलः शत्रुदीपाशुगो-
ऽरातिपाथोधिकुम्भोद्भवो द्वेषणास्तोममातङ्गकण्ठीरवो
बलकुलपुरशूलपाणिर्महोमोहितामात्यमित्रान्वयो-
दन्वदिन्दुः पराक्रान्तिबाहुर्महीनायको भाति विद्वन्मुदे ॥

उद्दामो यथा,—

न० न० र० र० र० र० र० र०

सपदि यदवलोकनाद्देवदैत्योरगग्रामणीसिद्धविद्याधरा-

र० र० र० र० र० र० र०

द्या नरेन्द्रास्तथान्ये जनाः स्युः कृतार्थाः सदारात्मजाः कामदा-
स्तव निवसति देव देहे लसल्लक्षणे सेह लक्ष्मीर्मुखाम्भोरुहे
भारती विश्ववन्द्या नरीनृत्यते क्षीरकुन्देन्दुगौरी मुदा ।
हृदयसरसिजे मुहुर्द्योतते नीतिसीमन्तिनी गाढमन्त्रान्निरी-
क्ष्येति कीर्ती रुषा सत्वरं सप्त संलङ्घ्य वारांनिधीन्निर्ययौ
क्षितिपतिरिति मेदिनीजानिरित्यन्वहं वाचमाकर्ण्य सोढुं न श-
क्ता सती द्वेष्यया श्रीपराक्रान्तिबाहो ! महाभाग ! भूमीपते ! ॥

शङ्खो यथा,—

न० न० र० र० र० र० र० र०

तव कथमधुना दरीदृश्यते मीनशुष्कं मुखं नाथ कन्दर्पचि-

र० र० र० र० र० र० र० र०

त्तव्यथाया मनो·दुःखमासीत्कुतो हन्त जीयां समालोक्यतां भूयसी-
मभिजजशमनीमपूर्वानुभूतां सवामेक्षणापत्यमित्रादिका-
नां च बन्धुव्रजानां द्रुहुं ब्रूहि कस्मान्नशो धास्तव ज्ञातयः कथ्यते ।
सकलजलधिशोषणेन प्रभो सत्यमेतत् किमेवं कथं श्रीपरा-
क्रान्तिबाहौ प्रयाते तदीयावसेना खुरक्षुण्णभूरेणुभिर्निश्रितै-
स्तदनु समदनो दृशा दिव्यया वीक्ष्य वृत्तान्तमाश्वासयामास शो-
च्यद्विषत्सुन्दरीदीर्घनेत्राम्बुवाहैः पुनः पूरितस्त्वन्न शोचेति तम् ॥१२॥

प्रचितकसमभिधोधीरधीभिःस्मृतोदण्डकोनद्वयादुत्तरैःसप्तभिर्यैः १३

नद्वयात्परतस्तकारेणापि क्वचिद्दण्डका दृश्यन्ते ॥ १४ ॥

एवमेकोनसहस्राक्षरवृद्धिर्भवति दण्डकं वृत्तम्* ॥ १५ ॥

इति वृत्तरत्नाकराख्ये छन्दःशास्त्रे वर्णवृत्तकथनं नाम
तृतीयोऽध्यायः ।

---

नद्वयात् नयुगलात् उत्तरैः परैः सप्तभिर्यैः यगणैः प्रचितकसमभिधो दण्डकः धीरधीभिः पण्डितैः स्मृतः कथितः प्रचितक इति समभिधा सम्यक् अभिधानं यस्य तथोक्तः । प्रचितकनामेत्यर्थः । तद्यथा,—

न० न० य० य० य० य० य० य० य०

द्विजकुलमखिलमङ्गैरुपाङ्गैश्च वेदानधीते समं काव्यशास्त्रागमाद्यैः
स्वपथगतिनिरतास्ते च वर्णत्रयो यस्य राज्ये तथा शङ्करा धर्मयुक्ताः ।
भवति सगिरिवना रत्नसूर्भूमिरब्दाश्च वर्षन्ति काले सदा धेनवः स्यु-
श्चिरमपि बहुपयोदाः पराक्रान्तिबाहौ ततः सिंहलाधीश्वरेशस्तमास्ताम् ॥१३॥

नद्वयात् नगणद्वयात् परतः तकारेणापि तगणेनापि क्वचित् कुत्रचित् दण्डकाः दण्डकवृत्तविशेषाः दृश्यन्ते । तद्यथा,—

न० न० त० त० त० त० त० त० त०

प्रतिदिनमवलोकेश्वरो नाथ एषा क्रिया लोकरक्षाकरी सर्ववेदीति
विदधदनुपमः सम्भ्रमं त्यज्यसेतस्ततो हीनदीनानुकम्पीति विज्ञाय ।
शरणमहमुपैमि प्रभुं तं मदीयप्रमोदालयं बोधिसत्त्वाग्रगण्यं नु
व्रजत सपदि यूयं च सर्वे जनाः स्वर्गमोक्षार्थिनस्तं गुरुं सिद्धये साधु ॥१४॥

एवमुक्तप्रकारेण रगणयगणतगणैः क्रमेण वृद्धिः वृद्धिंगतम् दण्डकं वृत्तम् एकोन सहस्राक्षरं भवति । एतेषामुदाहरणानि ग्रन्थबाहुल्यभयादिह न लिखितानीति ॥१५॥

इति श्रीशाक्यमुनेर्भगवतः सर्वज्ञस्य परमोपासकेन गौडदेशवास्तव्येन
श्रीबौद्धागमचक्रवर्तिना भूसुरेणाऽचार्येण विरचितायां वृत्तरत्नाकर-
पञ्चिकायां समवृत्तविभागप्रतिपादनो नाम तृतीयोऽध्यायः ।

---

* एते द्वे सूत्रे बहुषु पुस्तकेषु न दृष्टे ॥

## चतुर्थोऽध्यायः ।

विषमे यदि सौ सलगा दले
भौ युजि भाद्गुरुकावुपचित्रम् ॥ १ ॥
भत्रयमोजगतं गुरुणी चेद्
युजि च नजौ ज्ययुतौ द्रुतमध्या ॥ २ ॥
सयुगात्सगुरू विषमे चेद्
भाविह वेगवती युजि भाद्गौ ॥ ३ ॥

अथेदानीमर्धसमवृत्तानां लक्ष्यलक्षणान्याचष्टे । दले अर्धे इत्यधिकारः स्यादाध्याय-परिसमाप्तेः । सश्च सश्च सौ सश्च लश्च गश्च सलगाः सगणत्रयं लघुगुरू च विषमे अयुक्पादे यदि । भश्च भश्च भौ भगणौ भात् भगणात्परौ गुरुकौ गुरुद्वयम् युजि समपादे यदि तदा उपचित्रं नाम स्यात् । तद्यथा,—

सगणः सगणः सगणः ल० गु० भगणः भगणः भगणः गु० गु०

अधुना मधुना प्रतिबोधितं चूततरुं प्रसवं प्रसमीक्ष्य ।
भ्रमरावलिलीढदलं न के यान्ति मनोजवशं तु युवानः ॥ १ ॥

भानां त्रयं भत्रयं गुरु च गुरु च गुरुणी ओजगतं विषमपादसहितम् भगणत्रयं गुरुद्वयं च चेत् । नश्च जश्च नजौ किंभूतौ ? ज्ययुतौ जश्च यश्च ज्यौ ताभ्यां युतौ सहितौ युजि च समपादे च नगणजगणद्वययगणश्च चेत् । तदा द्रुतमध्या नाम स्यात् । तद्यथा,—

भगणः भगणः भगणः गु० गु० नगणः जगणः जगणः यगणः

चन्दनमिन्दुमहश्च सुगन्धि-मलयमरुन्मदिरा च मनोज्ञा ।
वामदृशां च वपुः सविलासं मनसिजपौष्टिकयोगविशेषः ॥ २ ॥

सयोर्युगं सयुगम् । तस्मात् सगणद्वयात्परौ सगुरू सगणगुरू विषमे अयुक्पादे चेत् । भश्च भश्च भौ भात् परौ गौ इह अस्मिन् युजि समपादे भगणत्रयं गुरुद्वयं च चेत् तदा वेगवती नाम स्यात् । तद्यथा,—

सगणः सगणः सगणः गु० भगणः भगणः भगणः गु० गु०

उदियाय गिरेः शिखराग्रादेषशशाङ्क उदारमुखाभः ।
भवनानि यथा परितुष्यन्मानवती जनमानविघाती ॥ ३ ॥

**ओजे तपरौ जरौ गुरुश्चेन्म्सौ**
**ज्गौग् भद्रविराड् भवेदनोजे ॥ ४ ॥**
**असमे सजौ सगुरुयुक्तौ**
**केतुमती समे भरनगाद्गः ॥ ५ ॥**
**ससजा विषमे यदा गुरुः**
**सभराः स्याल्ललिता समे लगौ ॥ ६ ॥**
***आख्यातकी तौ जगुरूग ओजे**

ओजे विषमपादे तात् तगणात्परौ जरौ जगणरगणौ गुरुश्चेत् । म् च सश्च म्सौ मगणसगणौ ज् च गश्च ज्गौ जगणगुरू ग् गुरुश्च । अनोजे समपादे चेत् । तदा भद्रविराड् नाम भवेत् । तद्यथा,—

तगणः जगणः रगणः गु० मगणः सगणः जगणः गु०गु०

**ब्रूते निजकिङ्करस्य कर्णे नीचैः पार्श्वगतस्य काल एवम् ।**
**नारायणपादपद्मभक्तं दृष्ट्वा दूरत एव मुञ्च मुञ्च ॥ ४ ॥**

सश्च जश्च सजौ सगणजगणौ । किंभूतौ? सगुरुयुक्तौ सश्च गुरुश्च सगुरु । ताभ्यां सगणगुरुभ्यां युक्तौ सहितौ । असमे अयुक्पादे चेत् । भश्च रश्च नश्च गश्च भरनगमिति समाहारे नपुंसकम् । समे युक्पादे । तस्माद्भगणरगणनगणगुरुतः परो गः गुरुश्चेत् तदा केतुमती नाम स्यात् । तद्यथा,—

सगणः जगणः सगणः गु० भगणः रगणः नगणः गु०गु०

**नलिनं द्विरेफमलिनं स्यादिन्दुमधः करोति च कलङ्कः ।**
**वदनं प्रमोदसदनं ते सुन्दरि केन वा सृजति साम्यम् ॥ ५ ॥**

सश्च सश्च जश्च ससजाः । विषमे विषमपादे सगणसगणजगणाः गुरुश्च यदा । सश्च भश्च रश्च सभराः लश्च गश्च लगौ । समे समपादे सगणभगणरगणाः लघु गुरु च । तदा ललिता नाम स्यात् । तद्यथा,—

सगणः सगणः जगणः गु० सगणः भगणः रगणः ल०गु०

**सहसा विदधीत न क्रिया-मविवेकः परमापदां पदम् ।**
**वृणुते हि विमृष्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ॥ ६ ॥**

तश्च तश्च तौ । जश्च गुरुश्च जगुरू । गः गुरुः । ओजे विषमचरणे तगणद्वयं जग-

* "आख्यानकी"ति पाठान्तरम् ।

जतावनोजे जगुरू गुरुश्चेत् ॥ ७ ॥
जतौ जगौ गो विषमे समे चेत्
तौ ज्गौ ग एषा विपरीतपूर्वा ॥ ८ ॥
सयुगात् सलघू विषमे गुरु-
र्युजि नभौ च भरौ हरिणप्लुता ॥ ९ ॥
अयुजि ननरला गुरुः समे
न्जमपरवक्त्रमिदं ततो जरौ ॥ १० ॥

---

णगुरुद्वयं च चेत् । जश्च तश्च जतौ । जश्च गुरुश्च जगुरू । गुरुः प्रसिद्धः । अनोजे समचरणे जगणतगणजगणाः गुरुद्वयं च चेत् । तदा आख्यातकी नाम स्यात् । तद्यथा,—

तगणः तगणः जगणः गु०गु० जगणः तगणः जगणः गु०गु०

**अग्रेहमग्रेहमिति प्रियायाः पुरा वचो-जीवितयो रणेऽभूत् ।**
**कण्ठाग्रहोजोर्बहिरुत्प्रयाणे प्रिये ! प्रियामीति विचारितायाः ॥ ७ ॥**

जश्च तश्च जतौ । जश्च गश्च जगौ गः गुरुः विषमे अयुक्पादे जगणतगणजगणगुरुद्वयं च चेत् । तश्च तश्च तौ । ज् च गश्च ज्गौ गः गुरुः समे युक्पादे तगणद्वयं जगणगुरुद्वयं च चेत् । एषा आख्यातकी विपरीतपूर्वा स्यात् विपरीताख्यातकी नाम भवति तद्यथा,—

जगणः तगणः जगणः गु०गु० तगणः तगणः जगणः गु० गु०

**शशाङ्कमग्ने मम सीधुपात्रे नाऽस्मिन् स राहु-र्ननु रोहिणी स्वः ।**
**वधो विदग्धः प्रमदाग्रसङ्गे यूनां मनः कम्पत इत्यचित्रम् ॥ ८ ॥**

सयोर्युगं सयुगम् । तस्मात् सगणद्वयात् । सलघू सगणलघू गुरुः प्रसिद्धः विषमे ओजपादे चेत् । नश्च भश्च नभौ भश्च रश्च भरौ । युजि समपादे नगणभगणौ भगणरगणौ च यदि । तदा हरिणप्लुता नाम स्यात् । तद्यथा,—

सगणः सगणः सगणः ल०गु० नगणः भगणः भगणः रगणः

**स ददौ प्रविभज्य महीपति-र्न कनकाद्रिमिति प्रतिवासरम् ।**
**प्रवदन्निव नीयत पङ्क्तयस्तव पराक्रमबाहुनृपाऽगुणम् ॥**

नश्च नश्च रश्च लश्च ननरलाः । गुरुः प्रसिद्धः । अयुजि विषमपादे नगणद्वयरगणलघुगुरवश्च चेत् । न् च जश्च न्जमिति समाहारे नपुंसकम् । जश्च रश्च जरौ । समे

अयुजि नयुगरेफतो यकारो
युजि च नजौ जरगाश्च पुष्पिताग्रा ॥ ११ ॥
वदन्त्यपरवक्त्राख्यं वैतालीयं विपश्चितः।
पुष्पिताग्राभिधं केचिदौपच्छन्दसिकं तथा ॥ १२ ॥
स्यादयुग्मके रजौ रजौ समेतु
जरौ जरौ गुरुर्यवात् परामतीयम् ॥ १३ ॥

इति वृत्तरत्नाकराख्ये छन्दःशास्त्रेऽर्द्धसमवर्णवृत्तकथनं नाम
चतुर्थोऽध्यायः ॥

---

युक्पादे नगणजगणम् ततः तस्मात् परौ जगणरगणौ चेत्। तदा इदम् अपरवक्त्रं नाम स्यात्। तद्यथा,—

नगणः नगणः रगणः ल० गु० नगणः जगणः जगणः रगणः

अथ हिमशुचिभस्मभूषितं शिरसि विराजितमिन्दुलेखया।
स्ववपुरतिमनोहरं हरं दधतमुदीक्ष्य ननन्द वासवः ॥ १० ॥

नयोर्युगं नयुगम्। तच्च रेफश्च नयुगरेफमिति समाहारे नपुंसकम्। तस्मात् नगणद्वयरगणात् परो यकारो यगणश्चेत् अयुजि विषमाङ्घ्रौ। नश्च जश्च नजौ जश्च रश्च गश्च जरगाः। युजि च समाङ्घ्रौ च नगणजगणद्वयरगणा गुरुश्च चेत्। तदा पुष्पिताग्रा नाम स्यात्। तद्यथा,—

नगणः नगणः रगणः यगणः　नगणः जगणः जगणः रगणः गु०

करतलगतमप्यमूल्यचिन्ता-मणिमवधीरयतीऽङ्गितेन मूर्खः।
कथमहमपहाय बुद्धरत्नं जगति धनी गुणवांश्च पण्डितश्च ॥ ११ ॥

अपरवक्त्रमित्याख्या नाम यस्य तत्तथोक्तम्। विपश्चितः अपरवक्त्रं वैतालीयं वदन्ति वैतालीयलक्षणस्याप्यत्र विद्यमानत्वात्। पुष्पिताग्रेत्यभिधा नाम यस्य तत्तथोक्तम्। तथा केचिच्छन्दोविदः पुष्पिताग्राभिधम् औपच्छन्दसिकं वदन्ति। तल्लक्षणस्याप्यत्र विद्यमानत्वात् ॥ १२ ॥

---

रश्च जश्च रजौ। पुनरपि रश्च जश्च रजौ। अयुग्मके विषमचरणे रगणजगणौ रगणजगणौ च चेत्। जश्च रश्च जरौ जश्च रश्च जरौ। समेतु समेचरणे जगणरगणौ पुनः जगणरगणौ गुरुश्च यदि। तदा इयं यवात् परामती यवमती नाम स्यात्। यवोऽस्याऽस्तीति वाक्ये संज्ञायामदन्तादपि मतु प्रत्ययः। अन्यत्र तु यवमतीत्येव भवति। तद्यथा,—

## पञ्चमोऽध्यायः

**मुखपादोऽष्टभिर्वर्णैः**
**परेऽस्मान्मकरालयैः क्रमाद्वृद्धाः ।**
**सततं यस्य विचित्रैः पादैः सम्पन्नसौन्दर्यं**
**तदभिहितममलधीभिः पदचतुरूर्ध्वाभिधं वृत्तम् ॥ १ ॥**

रगणः जगणः रगणः जगणः जगणः रगणः जगणः रगणः गु०

**राधिकामितस्ततश्च तामवेक्ष्य चिरं प्रसूनबाणखिन्नचेतसापि ।**
**नन्दनन्दनः स माधवः ससाद कलिन्द नन्दिनीतटान्तकुञ्जभूमौ ॥ १३ ॥**

इति श्रीशाक्यमुनेर्भगवतः सर्वज्ञस्य परमोपासकेन गौडदेशवास्तव्येन श्रीबौद्धागम-चक्रवर्तिना भूसुरेणाचार्येण विरचितायां वृत्तरत्नाकरपञ्चिकायामर्धसमवृत्त-विभागप्रतिपादनो नाम चतुर्थोऽध्यायः ॥

---

अथेदानीं पदचतुरूर्ध्वादि विषमवृत्तानां लक्ष्यलक्षणान्यभिधत्ते । अमला निर्मला धीर्बुद्धिर्येषां ते अमलधियः । तैर्मनीषिभिः तद्वृत्तं पदचतुरूर्ध्वाभिधमभिहितं नाम्ना पदचतुरूर्ध्वमिति प्रोक्तम् । तदिति किम् ? यस्य वृत्तस्य विचित्रैः पादैः मनोहरैश्चरणैः सततमनवरतं संपन्नसौन्दर्यं सम्पूर्णसुन्दरत्वं भवति । तेषां पादानां लक्षणमाह । मुखपादः प्रथमपादः अष्टभिर्वर्णैरुपलक्षितो भवति । अस्मात् प्रथमपादात् परे अन्ये त्रयः पादाः मकरालयैश्चतुर्भिर्वर्णैः क्रमाद्वृद्धाः क्रमेण वर्धन्तेस्म । अयमर्थः प्रथमः पादः अष्टवर्णः । द्वितीयो द्वादशवर्णः । तृतीयः षोडशवर्णः । चतुर्थो विंशद्वर्ण इति । तद्यथा,—

यगणः रगणः गु०गु०

**अपि वेदान्तमज्ञाय**

यगणः सगणः तगणः मगणः

**शिवब्रह्मसदित्यासामभाषन्ते**

तगणः भगणः मगणः मगणः यगणः गु०

**सुगतं यं च तथा बोधायन्ते पूरुषासङ्ख्या-**

नगणः नगणः सगणः भगणः सगणः रगणः गु०गु०

**स्तमखिलभुवननिदानं सततमभीष्टार्थदं वन्दे ॥ १ ॥**

प्रथममुदितवृत्ते
विरचितविषमचरणभाजि ।
गुरुकयुगलनिधन इह कलित आङा
विधृतरुचिरपदवितति यतिरिति भवति पीडः ॥ २ ॥
प्रथममितरचरणसमुत्थं
श्रयति जगति लक्ष्म
इतरदितरजनितमपि यदि च तुर्य
चरणयुगलकमविकृतमपरमिति कलिका सा ॥ ३ ॥

---

गुरुरेव गुरुकः तयोर्युगलं गुरुकयुगलम् । गुरुद्वयं निधने अवसाने यस्येति व्यधिकरणबहुव्रीहिः । विषमाः परस्परासदृशाः ते च ते चरणाश्चेति ते तथोक्ताः । विरचिता निबद्धाश्च ते विषमचरणाश्चेति पुनः कर्मधारयः । तान् भजतीति भजात् क्विन् प्रत्ययः । तस्मिन् विरचितविषमचरणभाजि । प्रथममुदितवृत्ते पूर्वमुक्तपदचतुरूर्ध्वाख्ये इह अस्मिन् गुरुकयुगलनिधने सति अयं पीडः स्यात् । किंभूतः ? आङा कलितः आङ्शब्दसंबद्धः । आपीडो नामेत्यर्थः । पुनः किंभूतः ? विधृतरुचिरपदविततियतिः विधृतरुचिरपदवितत्या यतिर्यस्य स तथोक्तः । तद्यथा,—

नगणः नगणः गु० गु०

तुहिनशिखरिपुत्री-

नगणः नगणः नगणः यगणः

तनयमनुपमगुणगणं तम् ।

नगणः नगणः नगणः नगणः सगणः गु०

ससुर-सुरपतिसरसिजभवहरीड्यं

न० न० न० न० न० न० गु०गु०

प्रणतजनसकलफलदमिभवदनमभिवन्दे ॥ २ ॥

इतरच्च तत् चरणं चेति इतरचरणम् । तस्मात् समुत्थं सम्यगुत्थानं यस्य तत् तथोक्तम् । जगति लोके प्रथमं प्रथमचरणं ( कर्ता ) इतरचरणसमुत्थं द्वितीयचरणसमुद्भूतं लक्ष्म लक्षणं यदि श्रयति भजति । इतरत्तुर्यमपि अन्यद्द्वितीयचरणमपि इतरजनितं प्रथमचरणजातं लक्षणं यदि श्रयति । अपरं चरणयुगलकम् अन्य-

**द्विगुरुयुतसकलचरणान्ता**
**मुखचरणगतमनुभवति च तृतीयः ।**
**चरण इह च लक्ष्म**
**प्रकृतमपरमखिलमपि यदि भवति लवली सा ॥ ४ ॥**

---

तृतीयचतुर्थपादद्वयम् अविकृतम् नान्यविकृतम् स्वस्वरूपस्थितं यदि स्यात् । इत्येवंसति सा कलिका नाम भवति । अस्यां कलिकायां प्रथमपादो द्वादशाक्षरः । द्वितीयस्त्वष्टाक्षरः । अन्यद्वयं पूर्ववत् । तद्यथा,—

नगणः नगणः नगणः यगणः
**सुचिरनिहितहितमतिकन्दा-**

नगणः नगणः गु० गु०
**ङ्कुर इव तव भाति ।**

नगणः नगणः नगणः नगणः सगणः गु०
**विषमजनदमनघटितविकटमूर्ते-**

नगणः नगणः नगणः नगणः नगणः नगणः गु० गु०
**स्त्रिपुरहरमकुटमणिसदृशदशनकलिकेयम् ॥ ३ ॥**

इह तृतीयश्चरणः मुखचरणगतम् आदिपादस्थं लक्ष्म लक्षणं यदि अनुभवति भजति । अपरं प्रकृतं प्रस्तुतम् । पूर्वोक्तम् अखिलमपि लक्ष्म सकलमपि लक्षणम् इह पादत्रये यदि भवति । तदा सा लवली नाम स्यात् । कीदृशी ? द्विगुरुयुतसकलचरणान्ता चरणानामन्तः चरणान्तः । द्विगुरुयुतः गुरुद्वयसहितः सकलचरणान्तः समस्तपादान्तो यस्याः सा तथोक्ता । अत्र तु प्रथमः पादो द्वादशाक्षरः द्वितीयः षोडशाक्षरः । तृतीयोऽष्टाक्षरः चतुर्थः पूर्ववद्विंशत्यक्षर इति । तद्यथा,—

नगणः नगणः नगणः यगणः
**प्रसर-दुरुदहनघनघोरा**

न० न० न० न० स० गु०
**च्छटमिव गगनतलमिव च विदधाना ।**

तृतीयमधिवसति यदि तुर्यं
चरमचरणपदमवसितिगुरुयुग्मा ।
निखिलमपरमुपरितनसममिह ललितपादा
त्रितयममृतधारा ॥ ५ ॥

इति पदचतुरूर्ध्वप्रकरणम् ॥

---

नगणः नगणः गु०गु०

प्रसभमभिमुखं ते

नगणः नगणः नगणः नगणः नगणः नगणः गु०गु०

प्रशमयति शमनमविनयनवलननवलीला ॥ ४ ॥

इह अस्मिन् वृत्ते तृतीयं तुर्यम् तृतीयं चरणम् (कर्ता) चरमचरणपदं यद्यधिवसति अन्तिमपादस्थाने यदि तिष्ठति । अत्राधारेऽपि व्याप्यविवक्षायां कर्मणि द्वितीया । पदशब्दो स्थानवचनः । उक्तं च,—"पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुष्वि"ति । इह अस्मिन् अपरं निखिलं त्रितयम् अन्यत् पादत्रयम् उपरितनसमम् प्राक्तनसदृशम् । पदचतुरूर्ध्वतुल्यं यदि भवति । तदा अमृतधारा नाम स्यात् । एषा किंविशिष्टा ? अवसितिगुरुयुग्मा अवसाने गुरुद्वयं यस्याः सा तथोक्ता । पुनः किंभूता ? ललितपादा ललिता मधुरा मनोज्ञाः पादाश्चरणाः यस्याः सा तथोक्ता । अत्र प्रथमपादो द्वादशाक्षरः द्वितीयः षोडशाक्षरः तृतीयो विंशत्यक्षरः चतुर्थस्त्वष्टाक्षर इति तद्यथा,—

नगणः नगणः नगणः यगणः

मृदुजनमनुपुनरियमेव

नगणः नगणः नगणः नगणः सगणः गु०

व्युपशमित-सकलुषविषततिविशेषा ।

नगणः नगणः नगणः नगणः नगणः नगणः गु०गु०

प्रतिमुहुरभिनवविमलसुखनिधिमुपनयन्ती

नगणः नगणः गु०गु०

नियतममृतधारा ॥ ५ ॥

इति पदचतुरूर्ध्वप्रकरणम्

---

सजमादिमे सलघुकौ च
नसजगुरुकेष्वथोद्गता ।
त्र्यङ्घ्रिगतभनजला गयुताः
सजसा जगौ चरम एकतः पठेत् ॥ ६ ॥
चरणत्रयं भजति लक्ष्म
यदि निखिलमुद्गतागतम् ।

अधुनोद्गतादीनां लक्ष्यलक्षणानि व्याहरति । सश्च जश्च सजमिति समाहारे नपुंसकम् । लघुरेव लघुकः सश्च लघुकश्च सलघुकौ । आदौ भवः अदिमः । आदिमे आद्ये पादे सगणजगणसगणलघवश्च यदि । नश्च सश्च जश्च गुरुकश्च नसजगुरुकाः । अथ द्वितीये पादे नगणसगणजगणगुरुकेषु सत्सु । भश्च नश्च जश्च लश्च भनजलाः त्रिभिः सङ्ख्यातोऽङ्घ्रिस्त्र्यङ्घ्रिः त्र्यङ्घ्रीणां गतास्त्र्यङ्घ्रिगताः । तेच ते भनजलाश्चेति कर्मधारयः । किंभूताः ? गयुताः गुरुसहिताः । तृतीयपादे भगणनगणजगणाः लघुगुरू च यदि । सश्च जश्च सश्च सजसाः जश्च गश्च जगौ । इह जगणाद्व्यतिरिक्तश्चतुर्थः पादो नामान्यो नास्तीत्यभेदोपचारात् "सजसा जगौ चरम एकत" इत्युक्तम् । एतदुक्तं भवति। चरमे पश्चिमे चरणे सगणजगणसगणजगणाः गुरुश्च चेत् । तदा उद्गता नाम स्यात् । "एकतः पठे-" दिति अर्धद्वयमप्येकीकृत्य एकत उच्चारयेत् । द्वितीयपादस्तृतीयपादश्च सन्धिसमासवशादेकीभवतीत्यर्थः । उक्तं च जयदेवेन,—"तरसोदिता सजसलेष्वि"त्यादि । तत्र च तरसोदितेति वेगेनोच्चारिता । अर्धान्ते विराममन्तरेण अर्धद्वयमेकीकृत्य पठितेत्यर्थः । तद्यथा,—

सगणः जगणः सगणः ल०

तडितोज्ज्वलं जलदराशि-

नगणः सगणः जगणः गु०

मनिशमुदहार बन्धुरम् ।

भगणः नगणः जगणः ल०गु०

घोरघनरसितमीशतनुः

सगणः जगणः सगणः जगणः गु०

कृपया कयापि वहतीयमुद्गता ॥ ६ ॥

चरणत्रयं प्रथमद्वितीयचतुर्थास्त्रयः पादा उद्गतागतम् उद्गतावृत्तस्थितम् निखिलं

नौं भगौ भवति सौरभकं
चरणे यदीह भवतस्तृतीयके ॥ १० ॥
नयुगं सकारयुगलं च
भजति चरणं तृतीयकम् ।
तदुदितमुरुमतिभिर्ललितं
यदि शेषमस्य खलु पूर्वतुल्यकम् ॥ ११ ॥

इत्युद्गताप्रकरणम् ॥

---

लक्ष्म सकलं लक्षणं यदि भजति । र्च नश्च नौं भश्च गश्च भगौ इह अस्मिन् चरणे तृतीयके तृतीये पादे । रगणनगणौ भगणगुरू च यदि भवतः । तदा सौरभकं नाम भवति । तद्यथा,—

सगणः जगणः सगणः ल०
अत एव दुष्करतराणि

नगणः सगणः जगणः गु०
विलसितशतानि तन्वतः ।

रगणः नगणः भगणः गु०
ह्लादयत्यखिललोकमिदं

सगणः जगणः सगणः जगणः गु०
पटुकीर्तिसौरभकमद्भुतं विभोः ॥ १० ॥

नयोर्युगं नयुगम् । सकारयोर्युगलं सकारयुगलम् । अस्य वृत्तस्य तृतीयकं चरणं तृतीयोऽङ्घ्रिः । नगणद्वयं सगणद्वयं च यदि भजति । अस्य वृत्तस्य शेषम् अन्यत्प्रथम-द्वितीयचतुर्थपादत्रयम् । खलु निश्चयेन यदि पूर्वतुल्यकम् उद्गतासमं स्यात् । तत् तदा उरुमतिभिः महाबुद्धिभिः कोविदैः ललितमुदितं ललितमिति नाम्ना गदितम् । तद्यथा,—

सगणः जगणः सगणः गु०
भ्रुकुटी-कटाक्ष-दशनेषु

नगणः सगणः जगणः गु०
किमपि विकृतानि बिभ्रतः ।

**म्सौ ज्भौ गौ प्रथमाङ्घ्रिरेकतः पृथगन्य-**
**त्रितयं सनजरगास्तथा ननौ सः।**
**त्रिनपरिकलितजयौ**
**प्रचुपितमिदमुदितमुपस्थितपूर्वम् ॥ १२ ॥**

---

नगणः नगणः सगणः सगणः

**दमयति तव भुवनानि विभो !**

सगणः जगणः सगणः जगणः गु०

**ललितं च किं न विकटं यदीदृशम् ॥ ११ ॥**

**इत्युद्गताप्रकरणम् ॥**

---

संप्रत्युपस्थितप्रचुपितप्रभृतीनां लक्ष्यलक्षणानि ब्रवीति। म् च सश्च म्सौ ज् च भश्च ज्भौ गश्च गश्च गावित्येकशेषः। मगणसगणजगणा भगणगुरुद्वयं च। प्रथमाङ्घ्रिः प्रथमपादः एकतः एकत्र पृथग् भवति। अन्यत्रितयम् इतरपादत्रयम्। अपरमपृथग् भवति। अमीषां त्रयाणां पादानां लक्षणमाह सनजरगा इति। सश्च नश्च जश्च रश्च गश्च सनजरगाः। सगणनगणजगणरगणा गुरुरेकश्च। तथा तेन प्रकारेण। नश्च नश्च ननौ नगणद्वयं सः सगणश्च। तृतीयपादः। त्रयश्च ते नाश्चेति त्रिनाः तैः परिकलितौ सहितौ जयौ जगणयगणौ। नगणत्रयं जगणयगणौ च। चतुर्थः पादः। इदं वृत्तं प्रचुपितम्। किंभूतम्? उपस्थितपूर्वम् उपस्थितशब्दः पूर्वो यस्मिंस्तत्तथोक्तम्। उपस्थितप्रचुपितं नाम भवतीत्यर्थः। अस्मिन् वृत्ते प्रथमः पादः यतिवशात् पृथग्वक्तव्यः। अपरे च त्रयः पादाः एकीकृत्य तथा भिन्ना वाच्याः। जयदेवोऽप्याह—"म्सौ ज्भौ गौ च तुरीयमेकतः पृथगन्यत् त्रितयं सनजरगेषु नौ सयुक्ता"विति। तद्यथा,—

मगणः सगणः जगणः भगणः गु० गु०

**प्राग्भारातिशयेपि तादृशेऽद्भुतभीमे**

सगणः नगणः जगणः रगणः गु०

**भुवनाहितहतये समं समन्तात्।**

नगणः नगणः सगणः

**मरुदनतिशयरसः**

नगणः नगणः नगणः जगणः यगणः

**प्रचुपितमपि तव न नमेति सलीलम् ॥ १२ ॥**

नौ पादेऽथ तृतीयके सनौ नसयुक्तौ
प्रथमाङ्क्रितयतिः प्रवर्धमानम् ।
त्रितयमपरमपि पूर्वसदृशमिह भवति
प्रततमतिभिरिति गदितं खलु वृत्तम् ॥ १३ ॥
अस्मिन्नेव तृतीयपादके तजराः स्युः
प्रथमे च विरतिरार्षभं ब्रुवन्ति ।

---

नश्च नश्च नौ सश्च नश्च सनौ । किंभूतौ ? नसयुक्तौ । नश्च सश्च नसौ ताभ्यां युक्तौ सहितौ । अथ अनन्तरम् । तृतीयके पादे नगणद्वयं सगण–नगणौ नगण–सगणौ च स्याताम् । इह अस्मिन् वृत्ते खलु निश्चयेन त्रितयमपरमपि अन्यपादत्रयमपि पूर्वसदृशम् उपस्थितप्रचुपिततुल्यं भवति । इत्येवं यथोक्तलक्षणे सति प्रततमतिभिः प्रतता विस्तृता मतिर्बुद्धिर्येषां ते प्रततमतयः । तैः सुधीभिः प्रवर्द्धमानं नाम वृत्तं गदितं कीर्तितम् । इदं किंविशिष्टम् ? प्रथमाङ्क्रितयतिः पूर्ववत् प्रथमपादे कृता यतिर्यस्य तथोक्तम् । तद्यथा,—

मगणः सगणः जगणः भगणः गु० गु०
आरब्धयेति भवन्तमाश्रयैकसमृद्धया

सगणः नगणः जगणः रगणः गु०
कुशलं यदमलमस्ति वर्धमानम् ।

नगणः नगणः सगणः नगणः नगणः सगणः
तत इदमखिलमुदञ्चतु भवनमुपरुद-

नगणः नगणः नगणः जगणः यगणः
न्वदभिमतमतिविविधवृत्तिविशेषः ॥ १३ ॥

तश्च जश्च रश्च तजराः । तृतीयपादके तगणजगणरगणाः यदि स्युः । त्रितयमपरमपि इतरपादत्रयमपि पूर्वसमम् उपस्थितप्रचुपितसदृशं यदि स्यात् तत् तदा आर्षभं ब्रुवन्ति । अदः कीदृशम् ? शुद्धविराट्पुरस्थितम् शुद्धविराडिति शब्दस्याग्रे स्थितम् । शुद्धविराडार्षभं नाम वदन्तीत्यर्थः । अस्मिन्नेव तृतीयचरण एव प्रथमे च आद्याक्षरे तकारे च विरतिर्यतिश्च भवति,—

तच्छुद्धविराड् पुरःस्थितं
त्रितयमपरमपि पूर्वसमं स्यात् ॥ १४ ॥

इत्युपस्थितप्रचुपितप्रकरणम् ॥

---

विषमाक्षरपादत्वात्पादैरसमञ्जसं धर्मवत् ।
यच्छन्दसि नोक्तमत्र गाथेति तत् सूरिभिः प्रोक्तम् ॥ १५ ॥

इति वृत्तरत्नाकराख्ये छन्दसि विषमवृत्तकथनं नाम
पञ्चमोऽध्यायः ॥

---

मगणः सगणः जगणः भगणः गु० गु०
किं भूयोपि भवन् ! भवन्तमाश्रयमाप्तः
सगणः नगणः जगणः रगणः गु०
स्थितिभारमतुलमार्षभं दधानम् ।
तगणः जगणः रगणः
तच्छुद्धविराड्विशेषभं
नगणः नगणः नगणः जगणः यगणः
* ह्यपरविषमशिरसि पदं विनिधत्ते ॥ १४ ॥

इत्युपस्थितप्रचुपितप्रकरणम् ॥

---

सूरिभिः प्राज्ञैः तद्वृत्तं गाथेति प्रोक्तम् । नाम्ना गाथेति गदितम् । अत्र छन्दसि इह छन्दःशास्त्रे यन्नोक्तं सामान्यविशेषलक्षणाभ्यां यन्न कथितम् । तत् किंभूतम्? पादैश्चरणैः असमञ्जसम् अयुक्तम् असममिति यावत् । कस्मादित्याकाङ्क्षायामाह । विषमाक्षरपादत्वात् विषमवर्णत्वाच्च । "विषमाक्षरपादत्वा"दितीयं गाथा चतुष्पदी । धर्म इव धर्मवत् । वतिरत्राधारे । अनेन प्रायः पुराणादिषु धर्मशास्त्रेष्वेव तासां गाथानां विषयो न काव्यादाविति प्रतिपादितम् । तथा चोक्तम् । सार्षीति । तत्र सेति गाथा । विषमाक्षरस्योदाहरणं यथा—

---

* "परशमशिरसि पदं विनिधत्ते" इति पाठः ।

**प्रस्तारो नष्टमुद्दिष्टमेकद्व्यादिलगक्रिया ।**
**सङ्ख्यानमध्वयोगश्च षडेते प्रत्ययाः स्मृताः ॥ १ ॥**

---

युधिष्ठिरो धर्ममयो महाद्रुमः
स्कन्दोऽर्जुनो भीमसेनोऽस्य शाखा ।
माद्रीसुतौ पुष्पफले समृद्धे
मूलं कृष्णो ब्रह्म च ब्राह्मणाश्च ॥

इदं चतुश्चत्वारिंशदक्षरं त्रिष्टुब्भवति । पञ्चचत्वारिंशदक्षरत्वाद्गाथा जाता । विषमपादस्योदाहरणं यथा,—

दशधर्मं न जानन्ति धृतराष्ट्र ! निबोध तान् ।
मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः ।
† त्वरमाणश्च भीतश्च लुब्धः कामी च ते दश ॥

इयमष्टचत्वारिंशदक्षरत्वात् सामान्यलक्षणेन गजगतित्वे सत्यपि पादश्चतुर्थोंश इत्युक्तविशेषलक्षणराहित्येन षट्पादत्वाद्गाथा । "यच्छन्दसि नोक्त"मित्यनेन आर्यादयोऽपि विषमाक्षरत्वेपि गाथा न भवन्तीति दर्शितम् ॥ १५ ॥

इति श्रीशाक्यमुनेर्भगवतः सर्वज्ञस्य परमोपासकेन गौडदेशवास्तव्येन श्रीबौद्धागमचक्रवर्तिना भूसुरेणाऽचार्येण विरचितायां वृत्तरत्नाकरपञ्चिकायां विषमवृत्तविभागप्रतिपादनो नाम पञ्चमोऽध्यायः ।

---

अथेदानीं षट्प्रत्ययान् वक्तुमुपक्रमते । प्रतीयन्ते ज्ञायन्ते अर्था एभिरिति प्रत्ययाः ज्ञानानि—"प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुष्वि"त्यमरः । एते षट्प्रत्ययाः स्मृताः । च्छन्दोविद्भिरिति शेषः । कतमे षट् । प्रस्तारः, नष्टम्, उद्दिष्टं, एकद्व्यादिलगक्रिया, सङ्ख्यानम्, अध्वयोगश्चेति । तत्र प्रस्तारप्रत्ययो नाम समस्तवृत्तसङ्ख्याभेदप्रकाशकशिल्पविशेषज्ञानम् । अस्य च्छन्दसस्तावदेवंविधानि वृत्तानि भवन्ति इदंच्छन्दः एतत्सङ्ख्याकवृत्तमिति प्रस्तारेणैव गम्यते । नष्टप्रत्ययो नाम यस्यकस्यचिच्छन्दसो यत्किञ्चिद्द्वितीयं तृतीयं वा वृत्तं नष्टं तस्य प्रस्तारमन्तरेण पुनर्दर्शनज्ञानम् । उद्दिष्टप्रत्ययो नाम यस्यकस्यचिच्छन्दसः किमपि वृत्तं पठित्वा इदं वृत्तं प्रस्तारे कतितममिति केनचित्पृष्टे सति तत्कथनोपायज्ञानम् । एकद्व्यादिलगक्रियाप्रत्ययो नाम अस्मिंश्छन्दसि सर्वगुरूणि वृत्तानि कति ? द्विगुरूणि त्रिगुरूणि वा कति ? सर्वलघूनि वृत्तानि कति ? द्विलघूनि कति ? त्रिलघूनि वा कतीत्याशङ्कायामियन्तीति ज्ञानम् । सङ्ख्यानप्रत्ययो नाम प्रस्तारं विनापि तत्तच्छन्दसामेतावन्ति वृत्तानीति वृत्तसङ्ख्यापरिज्ञानम् । अध्वयोगप्रत्ययो नाम सर्वेषां छन्दसां प्रस्तारभूमिपरिमाणज्ञानमिति ॥ १ ॥

---

† "चिरप्रवासो रोगीचे"ति पाठः ।

**पादे सर्वगुरावाद्याल्लघुं न्यस्य गुरोरधः ॥**
**यथोपरि तथा शेषं भूयः कुर्यादमुं विधिम् ॥ २ ॥**
**ऊने दद्याद्गुरूनेव यावत्सर्वलघुर्भवेत् ।**
**प्रस्तारोऽयं समाख्यातश्छन्दोविचितिवेदिभिः ॥ ३ ॥ युग्मम् ॥**

छन्दांसि विचीयन्ते विचार्यन्ते अस्यामनयेति वा छन्दोविचितिः छन्दःशास्त्रम्। तां वेदितुं ज्ञातुं शीलं येषां ते छन्दोविचितिवेदिनः तैश्छन्दोविचितिवेदिभिराचार्यैः। अयमेष प्रस्तारः समाख्यातः कथितः। प्रस्तरणं प्रस्तारः। भावे घञ्। एतं प्रस्तारं चिकीर्षुः पुरुषः समे भूमितले समुपविश्य प्राङ्मुखश्चेदुत्तरतः समारभ्य दक्षिणान्तं पूर्वोक्तगुरुसंज्ञया रेखया यस्य कस्यापि सर्वगुरुणो वृत्तस्य सर्वगुरुपादं पङ्क्याकारेण पुरतो विलिखेत्। अस्य लक्षणमाह पादे सर्वगुराविति। सर्वे गुरवो यस्मिन् सः सर्वगुरुः। तस्मिन् सर्वगुरौ पादे लिखिते सति। आद्यात् आदिभूतात् गुरोरधः लघु न्यस्य पूर्वोक्तलघुसंज्ञां रेखां लिखित्वा यथोपरि तथा शेषमिति उपरि यथा तथाऽधस्तादपि शेषम् अवशिष्टं गुरुं विन्यसेत्। भूयः कुर्यादमुं विधिमिति भूयः पुनरपि अमुं विधिम् इदं विधानं कुर्यात्। लघुं न्यस्य गुरोरध इति वचनाद्द्वितीयस्य पङ्क्तेरप्यादिभूताद्गुरुणोऽधस्तात् लघुं विन्यस्य यथोपरि तथा शेषमिति वचनात् शेषं समस्तं गुरुं विन्यसेत्। ऊने दद्यात् गुरूणीति ऊने न्यस्तस्य लघोरुत्तरतः शून्यशून्यस्थाने गुरूनेव दद्यात् स्थापयेत्। तृतीयपङ्क्तौ तु द्वितीयपङ्क्तिस्थितस्य लघुनोऽधःस्थानमूनं भवति। तत्र गुर्वक्षरं लिखेदित्यर्थः। एवमिति एवमुक्तप्रकारेण पङ्क्तिशो न्यस्तादाद्यादाद्याद्गुरोरधस्ताल्लघ्वक्षरं विन्यस्य ''यथोपरि तथा शेष''मिति वचनादुपरि लघुश्चेल्लघुं गुरुश्चेद्गुरुं च विन्यस्य न्यस्तस्य लघोरुत्तरत ऊने ऊने स्थाने गुरूनेव निदध्यात्। एवं भूतस्य न्यासस्य कोऽवधिरिति चेदाह यावत्सर्वलघुर्भवेदिति। एवं न्यस्ते न्यस्ते सति यावदन्तः पादः सर्वलघुः स्यात् तावत् प्रस्तारयेदित्यर्थः। सर्वेषां छन्दसामाद्यं वृत्तं सर्वगुरु। अन्त्यं वृत्तं सर्वलघु स्यादिति ज्ञेयम्। तद्यथा,—मध्यायां छन्दसि* । मो नारी। य केसा। रो मृगी। स नदी। हंसी त। शिखी ज। भास भ। न लघु इत्यष्टावेव वृत्तानि भवन्ति। एवमन्येषामपि सर्वेषां छन्दसां प्रस्तारो वेदितव्यः ॥ २—३ ॥

**इति प्रस्तारविधिः ॥**

---

* मध्यायां छन्दसि त्र्यक्षरप्रस्तारे लघुगुर्वोः ऋजुवक्ररेखतया तदाकारैणैवोदाहरणं नामान्तरफलानि च ॥

प्रथमभेदः ⌒ ⌒ ⌒ मगणः, भूमिः. श्रियं दिशति।
द्वितीयभेदः ‾ ⌒ ⌒ यगणः, जलम्, वृद्धिं करोति।

तृतीयो भेदः ⌒ ¯ ⌒ रगणः, अग्निः, विनाशं विदधति ।

चतुर्थो भेदः ¯ ¯ ⌒ सगणः, अनिलः, देशाटनं करोति ।

पञ्चमो भेदः ⌒ ⌒ ¯ तगणः, व्योम, धनमपहरति ।

षष्ठो भेदः ¯ ⌒ ¯ जगणः, अर्कः, रुजं करोति ।

सप्तमो भेदः ⌒ ¯ ¯ भगणः, चन्द्रः, कीर्तिरुज्ज्वलति ।

अष्टमो भेदः ¯ ¯ ¯ नगणः, देवः, आयुर्ददाति ।

एवमन्येष्वपि छन्दःसु प्रस्तारक्रमं गणफलानि च वेदितव्यानि । तथा मात्रावृत्तप्रस्तारोऽपि ग्रन्थान्तरे दृश्यते । तद्यथा,—

" तत्र प्रथमपङ्क्तौ स्याद्गुरुपादस्तु पूर्ववत् ।
द्वितीयपङ्क्तौ प्रथमादधोलेख्यो लघुर्गुरोः ॥
यथोपरि तथा शेषमूनस्थाने लघुं न्यसेत् ।
तृतीयादिषु पङ्क्तिष्वप्येवमेव गुरोरधः ॥
लघुं न्यस्यावशिष्टं तु पूर्ववत् परिकीर्तितम् ।
न्यूने मात्रात्रयं देयं तस्मिन्नादौ गुरुर्द्वयोः ॥
कलयोः स्यात्ततः पूर्वं लघुर्देयो भवेत्ततः ।
चतुर्थपङ्क्तावप्येवं पञ्चमं तु गुरोरधः ॥
लघुद्वयं लिखेत्पूर्वं शिष्टं तूपरिवद्भवेत् ।
एवं सर्वत्र विज्ञेयः कलाप्रस्तार उत्तमः ॥
तेन द्विगुरुपादस्य पञ्चभेदा भवन्त्यमी ।
सर्वान्तमध्यादिगुरुश्चतुर्लघुगणाः स्मृताः ॥

मात्रावृत्तादिषु गणनियमाः ग्रन्थकृता केदारभट्टेन प्रथमाध्याये उक्ताः । तत्र एको गुरुर्द्विकलः । ताभिः कलाभिश्चतुःकलो गणः स्यात् । अत्रापि पञ्चैव गणा भवन्ति । सर्वगुरुगणः सगणः जगणः भगणः सर्वलघुगण इति । एषांतु पूर्ववत् प्रथमं सर्वगुरुपादं विन्यस्य इहोक्तेषु श्लोकेषु नियमवशादेवं मात्रावृत्तगणाः प्रस्तारणीयाः । तद्यथा,—

प्रथमभेदः ⌒ ⌒ सर्वगुरुगणः ।

द्वितीयभेदः ¯ ¯ ⌒ अन्तगुरुगणः ( सगणः )

तृतीयभेदः ¯ ⌒ ¯ मध्यगुरुगणः ( जगणः )

चतुर्थभेदः ⌒ ¯ ¯ आदिगुरुगणः ( भगणः )

पञ्चमभेदः ¯ ¯ ¯ ¯ सर्वलघुगणः ।

एषां नामान्यपि प्राकृते पैङ्गले चोक्तानि । इच्छद्भिस्तत्रावलोकितव्यानि ॥

१०

**नष्टस्य यो भवेदङ्कस्तस्यार्धेर्धे समे च लः ।**
**विषमे चैकमाधाय तस्यार्धेर्धे गुरुर्भवेत् ॥ ४ ॥**

नष्टस्य वृत्तस्य योङ्कः चिह्नसङ्ख्या भवेत् । तस्याङ्कस्य समे युग्मपक्षे । अर्धेर्धे अर्धीकृते अर्धीकृते सति । लश्च लघुरेव लभ्यते । चेत्यत्रावधारणे । अस्याङ्कस्य विषमे अयुग्मपक्षे एकमाधाय अङ्कमेकमेकं निक्षिप्य अर्धेर्धे अर्धीकृते अर्धीकृते सति गुरुश्च गुरुरेव भवेत् । तद्यथा,—मध्यायां छन्दसि चतुर्थं वृत्तं नष्टं विस्मृतं तत् कथमिति केनापि पृष्टे नष्टस्य वृत्तस्य या सङ्ख्या तामर्धीकुर्यात् । तदा चतुर्णामर्धं द्वयं भवति । तस्यार्धेर्धे "समेचल" इति वचनात् अर्धीकृतं द्वयं पृथक् स्थापयित्वा समस्यार्धीकरणाल्लघुं न्यसेत् । पूर्वस्थापितं द्वयं पुनरर्धीकृत्य एकं पुनः पृथक् स्थापयित्वा पुनः समस्यार्धीकृतत्वाल्लघुं न्यसेत् । स्थितस्यैकस्य समत्वादर्धं कर्तुमशक्यतया हस्तादेकं संयोज्य पुनरेवार्धीकृत्य विषमस्यार्धीकृतत्वाद्गुरुं विन्यसेत् । तदा "सनदी" ति वृत्तं दृष्टम् * । अस्य छन्दसस्त्र्यक्षरवृत्तत्वात् पुनरर्धीकरणं न संभवति । एवमन्येषामपि छन्दसां यावद्वृत्ताक्षरं तावदेव एवं विदध्यात् ॥ ४ ॥

**इति नष्टवृत्तविधिः ॥**

---

*ग्रन्थान्तरनियमः—एवं कृते त्र्यक्षरच्छन्दसि चतुर्थं वृत्तं ( ˉ ˉ ˆ ) प्रथमद्वितीयलघुकः अन्त्यगुरुक इति ज्ञानं भवति । अथ मात्रानष्टं यथा चतुष्कलाप्रस्तारे द्वितीयः कीदृग्भेद इति प्रश्ने चतस्रः कलाः पृथक् स्थाप्यास्तासु प्रथमायामेकाङ्को देयः । द्वितीयायां द्व्यङ्कः । एकाङ्कद्व्यङ्कावेकीकृत्य जातस्त्र्यङ्कस्तृतीयायां द्व्यङ्कत्र्यङ्कावेकीकृत्य जातः पञ्चाङ्कचतुर्थौ यथापृष्टाङ्कं किं किं कलोपर्यङ्के लोपयेत् । तत्रावशिष्टे पूर्ववृत्ताङ्कं यथासंभवं लोपयेत् । यस्याङ्कस्य लोपस्तदधस्तनमात्रा परया मात्रया सहिता गुरुमायाति । प्रकृतिद्वितीयभेदप्रश्ने 'न्तिमपञ्चमे'ङ्के पृष्टे द्व्यङ्कं विलोप्यावशिष्टे त्र्यङ्के पूर्वत्राङ्के विलोपयेत् । एवंच तृतीयचतुर्थकलोपर्यङ्कयोर्लुप्तत्वात्तधस्तनमात्रयोर्गुरुत्वं भवतीत्यन्तगुरुद्वितीयो भेदो । यथात्र मदीयः संग्रहः,—

संस्थाप्येह पृथङ्मात्रास्तत्र चाङ्कान् समालिखेत् ।
एकद्व्यङ्कतृतीयाङ्का नायं मात्रात्रये क्रमात् ॥
ततः पूर्वं द्वयोन्मिश्रानन्ते पृष्टाङ्कलोपनम् ।
पूर्वपूर्वतरस्यापि लोपः सम्भवतोऽभवत् ॥
यस्य यस्य भवेल्लोपस्तदधो गुरुता भवेत् ।
परया मात्रयास्थं तन्मात्रानष्टं वदेत्सुधीः ॥

**उद्दिष्टं द्विगुणानङ्कानुपर्याद्यात् समालिखेत् ।**
**लघुस्थाने तु येऽङ्काः स्युस्तैः सैकैर्मिश्रितैर्भवेत् ॥ ५ ॥**
**वर्णान् वृत्तभवान् सैकानौत्तराधर्यतः स्थितान् ।**

उद्दिष्टं भवेदिति संबन्धः । उद्दिष्टं नाम पृष्टं वृत्तम् तत् कथम् ? उद्दिष्टस्य वृत्तपादस्य आद्यात् प्रथमवर्णाधस्तादेकमङ्कं लिखित्वा उपरि प्रथमाक्षरादूर्ध्वं द्वितीयतृतीयादिभ्योऽक्षरेभ्योधस्तात् द्विगुणानङ्कान् क्रमेण द्विरभ्यस्तानङ्कान् समालिखेत् विन्यसेत् । अङ्को नामाऽत्र सङ्ख्याज्ञापको रेखाविशेषः । स च प्रतिदेशं भिन्नाकृतिः । तेषामङ्कानां मध्ये लघुस्थाने लघुवर्णाधःस्थाने येत्वङ्काः स्युः तैरङ्कैः सैकैः एकसहितैः । मिश्रितैरिति पिण्डीकृतैः । सद्भिः उक्तं वृत्तं जायत इत्यर्थः । तद्यथा,—मध्यायां छन्दसि "रोमृगी" वृत्तं कतितममिति केनचिदुद्दिष्टे सति तदा तद्वृत्तं पाठक्रमेण लिखित्वा रोकारस्याधस्तादङ्कमेकं विलिख्य तमङ्कं द्विगुणीकृत्य मृकारस्याप्यधस्ताद् द्वाविति लिखित्वा तमङ्कं पुनर्द्विगुणीकृत्य गीकारस्याधोपि चत्वार इति लिखेत् । तदा मृकारस्य लघोः स्थाने द्विसङ्ख्यातो योऽङ्कस्तिष्ठति । एकसहितेन तेनाङ्केन तृतीयं वृत्तमिति ब्रूयात् । एवमन्यत्राप्यवगन्तव्यम्* ॥ ५ ॥

**इत्युद्दिष्टपादसङ्ख्याविधिः ॥**

---

इह वृत्तशब्दश्छन्दोवाचकः । वृत्ते छन्दसि भवान् जातान् वृत्तभवान् वर्णान् । किंभूतान् ? सैकान् वृत्तसङ्ख्याक्षरादधिकेनैकेन सहितान् । पुनः किंभूतान् ? औत्तराधर्यतः स्थितान् । उत्तरश्चाधरश्च उत्तराधरौ तयोर्भावः औत्तराधर्यम् । औत्तराध-

---

*ग्रन्थान्तरनियमः । अथ मात्रोद्दिष्टम् । चतुष्कलाप्रस्तारे आदिगुरुः कस्मिन् स्थानेऽस्तीति प्रश्ने न्यासः ( १, २, ३, ४ ) अत्र गुरुशिरस्था एकाङ्कोऽन्तिमकलोपरिस्थे पञ्चाङ्केऽपनेयः । तथा सति तत्रावशिष्टाश्चत्वार इति चतुर्थमादिगुरु ( ^ ‾ ‾ )स्थानं प्रकटं भवति । एवं सर्वत्राप्युन्नेयम् । अत्र मदीयसंग्रहः—

उद्दिष्टे नष्टवन्न स्यान्मात्राणां स्थापनं पृथक् ।
उद्दिष्टवृत्तप्रस्तारे लिखित्वोपरि विन्यसेत् ॥
कलयोराद्ययोरेकद्व्यङ्कावन्त्यकलासु तु ।
पूर्वपूर्वद्वयोन्मिश्रानङ्कानथ गुरूपरि ॥
अङ्कं प्रथममात्राया अपरस्यास्त्वधो गुरोः ।
असङ्करार्थमङ्कानामेकीकृत्य गुरूर्ध्वगान् ।
अङ्कानथ नयेदन्त्ये शिष्टं तूद्दिष्टमुच्यते ॥

**एकादिक्रमशश्चैतानुपर्युपरि निक्षिपेत् ॥ ६ ॥**
**उपान्त्यतो निवर्तेत त्यजन्नेकैकमूर्ध्वतः ।**
**उपर्याद्याद्गुरोरेवमेकद्व्यादि लगक्रिया ॥ युग्मम् ॥ ७ ॥**

र्येण शङ्काकारेण स्थितान् कृत्वेत्यध्याहार्यम् । स्थापितानेतांश्च वर्णानिति एकादिक्रमशः एकद्व्यादिक्रमेण उपर्युपरि ऊर्ध्वमूर्ध्वम् निक्षिपेत् योजयेत् । अत्र वर्णशब्दो वृत्तसङ्ख्यासङ्केतज्ञापकरेखाविशेषः ॥ ६ ॥

ऊर्ध्वतः उपान्तादुपान्तादुपरि एकैकम् एकमेकमङ्कम् त्यजन् परिहरन् उपान्त्यतः अधस्तादन्त्यस्य समीपात् निवर्तेत विरमेत् । अन्त्यस्य समीपमुपान्त्यमित्यव्ययीभावः । गुरोरिति मर्यादायां पञ्चमी । उपरि ऊर्ध्वम् आद्यात् प्रथमात् गुरोः सर्वगुरुपादादारभ्य एकद्व्यादिगुरुक्रिया स्यादित्यध्याहार्यम् । एवमिति एवमुक्तप्रकारेण । अधस्तादन्त्याल्लघोः सर्वलघुपादादारभ्य । एकद्व्यादिलघुक्रिया । एकलघु द्विलघु त्रिलघु एकगुरु द्विगुरु त्रिगुर्वादि सङ्ख्या भवेदिति शेषः । तद्यथा,—सुप्रतिष्ठायां छन्दसि । अस्य छन्दसः पञ्चवर्णत्वादेतान् पञ्चवर्णान् एकसहितान् कृत्वा षडङ्कान् एकमेकं विधाय उपर्यधोभावेन शङ्काकारेण विलिखेत् । तत्राद्यमधःस्थितमङ्कं द्वितीयेऽङ्के योजयेत् । तद्द्वयं तृतीयेऽङ्के योजयेत् । तत्त्रयं चतुर्थेऽङ्के योजयेत् । तच्चतुष्टयं पञ्चमेऽङ्के योजयेत् । तस्मात् पञ्चमादुपान्त्यान्निवृत्त्य पुनराद्यमङ्कं द्वितीयेऽङ्के निक्षिप्य त्रयं पश्येत् । तत्त्रयं तृतीयेऽङ्के निक्षिप्य षट्कं पश्येत् । तत्षट्कं चतुर्थेऽङ्के निक्षिप्य दशकं पश्येत् । तस्माच्चतुर्थादुपान्त्यान्निवृत्त्य पुनराद्यमङ्कं तृतीयेऽङ्के सङ्कलय्य चतुष्कं पश्येत् । तच्चतुष्कं षट्केऽङ्के सङ्कलय्य दशकं पश्येत् । तस्मात्तृतीयादुपान्त्यान्निवृत्त्य पुनराद्यमङ्कं चतुष्केऽङ्के संयोज्य पञ्चममङ्कं पश्येत् । तस्माद्द्वितीयादप्युपान्त्यान्निवृत्त्य राशिं पुनर्नवर्धयेत् । ततः स्थापितरूपं तावदेकं पञ्चकं दशकं पुनर्दशकं पञ्चकमेकमिति संभूय द्वात्रिंशत् । ततः उपरिष्टादारभ्य गुरुवृत्तानि । तथाधस्तादारभ्य लघुवृत्तानि च गणयेत् । तत्रोपरिष्टादारभ्य गुरुवृत्तगणना यथा,–पञ्चगुरुवृत्तमेकम् । चतुर्गुरूणि वृत्तानि पञ्च । त्रिगुरूणि वृत्तानि दश । द्विगुरूणि वृत्तानि दश । एकगुरूणि वृत्तानि पञ्च । अधस्तादारभ्य लघुवृत्तगणना यथा,—पञ्चलघुवृत्तमेकम् । चतुर्लघूनि वृत्तानि पञ्च । त्रिलघूनि वृत्तानि दश । द्विलघूनि वृत्तानि दश । एकलघूनि वृत्तानि पञ्चेति* । एवं छन्दसि सर्वत्रोन्नेयम् ॥ ७ ॥

**इत्येकद्व्यादिगुरुलघुसङ्ख्याविधिः ॥**

---

* एकाक्षरादिप्रस्तारे गुरुलघुवृत्तज्ञाने उदाहरणम् ॥

१ उक्तायाम् १ १,

२ अत्युक्तायाम् १ २ १,

लगक्रियाङ्कसन्दोहे भवेत् सङ्ख्या विमिश्रिते ।
उद्दिष्टाङ्कसमाहारः सैको वा जनयेदिमाम् ॥ ८ ॥
सङ्ख्यैव द्विगुणैकोना सद्भिरध्वा प्रकीर्तितः ।
वृत्तस्याङ्गुलिकी व्याप्तिरधः कुर्यात्तथाङ्गुलिम् ॥ ९ ॥

लश्च गश्च लगाः लघुगुरवः । तेषां क्रिया अनन्तरोदीरिताया लगक्रियाया येङ्काः संख्याः सङ्केतवाचकरेखाविशेषाः तेषां सन्दोहः समूहः लगक्रियाङ्कसन्दोहः । तस्मिन् लगक्रियाङ्कसन्दोहे विमिश्रिते पिण्डीकृते सति सङ्ख्या भवेत् वृत्तगणना जायते । तद्यथा,–सुप्रतिष्ठायां छन्दसि लगक्रियाङ्केषु कृतेषु सत्सु आद्ये स्थाने तावदङ्क एकः । द्वितीये स्थाने पञ्च । तृतीये स्थाने दश । चतुर्थे स्थाने च दश । पञ्चमे स्थाने पञ्च । षष्ठे स्थाने एकः । एतेङ्काः संभूय द्वात्रिंशद्वृत्तान्यप्येतावन्ति भवन्ति । एवमन्यत्रापि यावन्तोऽङ्कास्तावन्त एव वृत्तसङ्ख्या बोद्धव्याः । उद्दिष्टाङ्कसमाहार इति उद्दिष्टस्य वृत्तस्य अङ्काः तेषां समाहारः समूहः । किंभूतः ? सैकः एकेन सह वर्तत इति सैकः । सैक उद्दिष्टाङ्कसमाहारो वा इमां वृत्तसङ्ख्यां जनयेदुत्पादयेत् । वाशब्दोत्र पक्षान्तरे अथवेत्यर्थः । तद्यथा,—मध्यायामुद्दिष्टाङ्कविधाने आद्ये स्थाने तावदेकोऽङ्कः । द्वितीये स्थाने द्वे । तृतीये स्थाने चत्वारः । एते सहैकेन संभूयाष्टौ भवन्ति । वृत्तान्यप्येतावन्तीत्युभयथा दर्शितं सूत्रकृता । द्वयमपि प्रकारान्तरं ब्रूमहे । तद्यथा,–मध्यायां छन्दसि त्रिवर्णत्वात्तांस्त्रिवर्णान् पङ्क्याकारेण स्थापयित्वा तत्र प्रथमवर्णस्याधस्तादेकमङ्कं विलिखेत् । तमेकं द्विगुणीकृत्य द्वितीयस्याधस्ताद्वौ विलिखेत् तौ द्वौ द्विगुणीकृत्य तृतीयस्याधस्ताच्चतुरोङ्कान् विलिखेत् । ततस्तानन्तर्भूतांश्चतुरोऽङ्कान् पुनर्द्विगुणीकृत्य मध्यायामष्टौ वृत्तानीति वृत्तसङ्ख्यां कथयेदिति । एवमन्यत्रापि ॥ ८ ॥

इति वृत्तसङ्ख्याविधिः ॥

सद्भिः पण्डितैः सङ्ख्यैव अनन्तरोक्तं सङ्ख्याप्रमाणमेव अध्वा प्रकीर्तितः कथितः । अध्वा नाम च्छन्दःसरणिः । वृत्तप्रस्तारभूमिरिति यावत् । किंविशिष्टा सङ्ख्या ? द्विगुणा द्वौ गुणौ यस्याः सा द्विगुणा । द्विगुणीकृतेत्यर्थः । पुनः किंविशिष्टा ? एकोना एकेन रूपेण ऊना एकाङ्कवर्जिता । व्यापनं व्याप्तिः वृत्तस्य पद्यपादस्य व्याप्तिरङ्गुलिकी स्यादिति शेषः । अङ्गुलं परिमाणं यस्याः सा अङ्गुलिकी । तथा तेन प्रकारेण अधः

३ मध्यायाम् १ ३ ३ १,
४ प्रतिष्ठायाम् १ ४ ६ ४ १,
५ सुप्रतिष्ठायाम् १ ५ १० १० ५ १,
अत्रैकगलादिभेदज्ञानार्थं मात्रावृत्तप्रस्तारोऽन्यत्रोक्तोपि ग्रन्थविस्तरभयादस्माभिरत्र न लिखितः

वंशेऽभूत् कश्यपस्य प्रकटगुणगणः शैवसिद्धान्तवेत्ता
विप्रः † पव्येकनामा विमलतरमतिर्वेदशास्त्रार्थबोधी* ।
केदारस्तस्य सूनुः शिवचरणयुगाराधनैकाग्रचित्त-
श्छन्दस्तेनाभिरामं प्रविरचितमिदं वृत्तरत्नाकराख्यम् (१) ॥

इति वृत्तरत्नाकराख्ये छन्दसि प्रस्तारादिकथनं नाम षष्ठोऽध्यायः ॥

---

समाप्तश्चायं ग्रन्थः ॥

---

वृत्तस्याधस्तात् अङ्गुलीम् अङ्गुलप्रमाणं कुर्यात् । इहाङ्गुलशब्देन मध्यमाङ्गुलिमध्यपर्वणा दैर्घ्यन्ततः वा कथ्यते । गुरूणां लघूनां वा लिखितवृत्तस्थितानामन्तरमप्यङ्गुलप्रमाणमेव प्रत्येतव्यम् । तत्तच्छन्दसां प्रस्तारसम्भवानि वृत्तानि कियति भूमिभागे तिष्ठन्तीति चेदुच्यते । यस्य कस्यचिच्छन्दसो यावती वृत्तसङ्ख्या तावतीमेव सङ्ख्यां द्विगुणीकृत्य पुनस्तत एकमङ्कं परित्यज्य तावतीभिरङ्गुलिभिः परिमिते भूमिभागे लिखन्त इति वक्तव्यम् । तद्यथा,–मध्यायां नाम च्छन्दसि तावदष्टौ वृत्तानि भवन्ति । तानि द्विगुणीकृत्य तेभ्योऽङ्कमेकं परित्यज्य पञ्चदश पश्येत् । तदा विस्तारस्तत्र पञ्चदशाङ्गुलिपरिमिते भूमितले तान्यष्टौ वृत्तानि । तेषां वृत्तानामन्तराङ्गुलानि च सप्त तिष्ठन्तीति । आयामतस्तु पुनरक्षरसङ्ख्यया वक्तव्यम् । यथा,–मध्यायां छन्दसि द्वादशाक्षराणि वृत्तानि तेष्वेकं वृत्तं द्विगुणीकृत्य तस्मादेकस्मिन्नक्षरे परित्यक्ते सति त्रयोविंशतिरक्षराणि भवन्ति । तावदङ्गुलिपरिमिते भूमितले तत्तद्वृत्तं तिष्ठतीति व्यवहरेत् । एवं सर्वत्रापि छन्दसि समुन्नेयम् ॥ ९ ॥

इति प्रस्तारभूमिमानविधिः ॥

---

इति श्रीशाक्यमुनेर्भगवतः सर्वज्ञस्य परमोपासकेन गौडदेशवास्तव्येन श्रीबौद्धागमचक्रवर्तिना भूसुरेणाचार्येण विरचितायां वृत्तरत्नाकरपञ्चिकायां षट्प्रत्ययविभागप्रतिपादनो नाम षष्ठोऽध्यायः ॥

---

† "पव्येकनामा" इति च पाठः ।

* "वेदतत्वार्थवेत्ता" इति "वेदतत्वार्थबोधी" इति "वेदतत्वावबोधे" इति च पाठाः ॥

(१) अयं वंशेऽभूदित्यादिर्ग्रन्थकर्तुर्नामगोत्रपरिदीपकः श्लोकस्तु वृत्तरत्नाकरपञ्चिकायां वा हस्तलिखितेषु वृत्तरत्नाकरपुस्तकेषु वा मया न दृष्टः । किन्तु ग्रन्थकर्तुः । केदारस्य नामगोत्रादि

## अथ व्याख्याकर्तुर्वंशादिकथनम् ।

श्रीमद्राहुलपादतस्त्रिपिटकाचार्याद्गुरोर्निर्मलं
बौद्धं शास्त्रमधीत्य यस्तु शरणं रत्नत्रयं शिश्रिये ।
यो बौद्धागमचक्रवर्तिपदवीं लङ्केश्वराल्लब्धवान्
स श्रीमानिह सर्वशास्त्रनिपुणो व्याख्यामिमां व्यातनोत् ॥ १ ॥

---

वंशेऽभूदिति । कश्यपस्य मुनेः वंशे यः पथ्येकनामा ब्राह्मणोऽभूत् । तस्य पुत्रेण केदारेणेदं वृत्तरत्नाकरनामकं छन्दः प्रविरचितमिति संबन्धः । कोऽसौ केदारः ? कश्यं मद्यं पिबतीति कश्यपः । पुरा ब्रह्मणः पुत्रो मरीचिरिति विश्रुतो योऽभूत् । तस्य मद्यपानात् कश्यप इति नाम्ना पुत्रश्चाभूत् । तदुक्तम्,—"ब्रह्मणस्तनयो योऽभूत् मरीचिरिति विश्रुतः । कश्यपस्तस्य पुत्रोऽसीत् कश्यपानात् स कश्यप" इति । तस्य कश्यपस्य मुनेः वंशे कुले समुत्पन्न इति भावः । "प्रकटगुणगणः" अत्र प्रशब्दः अतिशयार्थद्योतकः । प्रकटाः अतिशयस्पष्टाः । गुणगणाः गुणराशयो यस्य सः तथोक्तः अतिशयलक्षणसंपन्नेन रूपेण च शीलव्रतादिगुणसमूहेन च समन्वागत इति यावत् । "शैवसिद्धान्तवेत्ता" शिवस्येदं शैवं शिवप्रोक्तम् । शिवो देवता अस्येति वा शैवः । शिवपूजनाभिरत इति यावत् । सिद्धो निश्चितोऽन्तो यस्मादिति सिद्धान्तः प्रमाणाद्युपन्यासेन पूर्वपक्षनिरासकः सिद्धपक्षस्य स्थापनरूपो वाक्यस्तोम इत्यर्थः । शैवश्चासौ सिद्धान्तश्चेति कर्मधारयः । तौ जानातीति शैवसिद्धान्तवेत्ता । शिवपूजाविधेः सिद्धान्तस्य च ज्ञातेऽत्यर्थः । विमलतरा अतिशयनिर्मला मतिर्बुद्धिर्यस्य सः तथोक्तः । परिशुद्धज्ञानवानिति यावत् । वेदशास्त्रार्थबोधीति । वेदोत्र मन्त्रब्राह्मणस्तथा च स्मृतिब्राह्मणयोर्वेद इति नामधेयम् । शास्त्राणि न्यायादीनि तेषाम् । अर्थस्य तात्पर्यार्थस्य बोधी ज्ञाता पथ्येकनामा पथ्येक इति नाम्ना समन्वितः विप्रः ब्राह्मणः अभूदिति शेषः । तस्य सूनुः पुत्रः । शिवस्य चरणौ पादौ तयोर्युगं युग्मम् । ईश्वरपादद्वन्द्वमिति यावत् तस्य आराधनेन पूजनेन सेवनेन वा एकाग्रं चित्तं यस्य सः तथोक्तः । शिवपादयुग्मपूजनेन विषयान्तरव्यावृत्त्या विक्षेपरहितचित्तवानित्यर्थः । व्यधिकरणबहुव्रीहिः केदारः केदारभट्ट इति नाम्ना प्रसिद्धः पण्डितः । अस्तीत्यत्राध्याहार्यम् । तेन विप्रेण अभिरामं सुन्दरम् मनोहरं वा वृत्तरत्नाकराख्यं वृत्तरत्नाकरनामकम् । इदं छन्दः एतच्छन्दःशास्त्रं प्रविरचितं प्रकर्षेण कृतमित्यर्थः ॥ १ ॥

---

ग्रन्थारंम्भ एव दर्शितत्वात् पुनस्तदर्थपरिदीपने व्यर्थतया पञ्चिकाकृता नोक्तमिति मन्तुमवसरोऽप्यस्ति । अपितु वाराणसीकलिकातादिषु महानगरेषु मुद्रितवृत्तरत्नाकरपुस्तकेषु प्रायस्तस्य दर्शनादिहापि तं युज्य तस्यार्थपरिज्ञानार्थं मयैषा टीका क्रियते ॥

विप्रो विद्वान् विनयभवनो बन्धुभूतः सतां यः
सुब्रह्माणो निपुणगणकग्रामणीः स्कन्दभक्तः ।
तस्याऽस्माभिर्बहुगुणवतः प्रार्थनाभिः कृतेऽयं
छन्दोविद्याभ्युदयजननी पञ्चिकासन्मुदेऽस्तु ॥ २ ॥

भारद्वाजकुलोद्भवाभिजननी देवीति नाम्नी सती
श्रीकात्यायनवंशजो गणपतिर्धीमान् पिता मे प्रभुः ।
सोदर्यौ तु हलायुधश्च गुणिनावाङ्गीरसश्चानुजौ
ग्रामो मे विरवाटिकोऽथ विबुधानन्दो मुकुन्दाश्रमः ॥ ३ ॥

तर्कव्याकरणश्रुतिस्मृतिमहाकाव्यागमालङ्कृति-
च्छन्दोज्योतिषनाटकार्थकथनाचार्यः सदग्रेसरः ।
आर्यः पण्डितवर्यनन्दनगुणस्त्यागी कवीन्द्रः क्षमी
श्रीबौद्धागमचक्रवर्तिधरणीदेवः समुज्जृम्भते ॥ ४ ॥

श्रीमत्सौगतवत्सरे नवनिधिद्वारेन्दुसङ्ख्ये तिथौ
द्वादश्यां शशिवासरे श्रवणभे माघस्य पक्षे परे ।
लङ्कायाञ्जयवर्धनाख्यनगरे विद्वद्व्रजालङ्कृते
स्थित्वेमामपि पञ्चिकामकरवं भूत्यै कविस्वैषिणाम् ॥ ५ ॥

वसन्तु सन्तः सुकृतैकभाजनं
मुदं मदीयां प्रसमीक्ष्य सत्कृतिम् ।
भवन्त्वसन्तोऽपि हसन्त एव मा-
मनारतं ते सुखिनो गुणद्विषः ॥ ६ ॥

*व्यासक्तास्तं राकाहिमकरकोटिरुचिं ये सन्तः
शरणं यान्त्यवलोकितनाथं ते खलु भुवि शुभवन्तः ।
अश्रुतशास्त्रव्याख्याकरणे प्रसरति सुमतिस्तेषां
किंच मनोहरता सहसाकृते विजये च परेषाम् ॥ ७ ॥

नाथतोहमवलोकितेश्वरात् संचरन् समधिगम्य वाग्मिताम् ।
अग्रणीरभवमित्युदारया संपदा सममिति प्रकीर्तितम् ॥ ८ ॥

**इति श्रीवृत्तरत्नाकरपञ्चिका समाप्ता ॥**

---

**इति पदचतुरूर्ध्वप्रकरणम् ॥**

---

*अयन्तु श्लोकः सर्वासु हस्तलिखितासु वृत्तरत्नाकरपञ्चिकास्वपि अतीवाकुलत्वेनापरिशुद्ध एव दृश्यते ॥

## क्रय्यपुस्तकानि ।

# प्राकृतपिङ्गलसूत्राणि ।

## श्रीमद्वाग्भटविरचितानि लक्ष्मीनाथभट्टकृतटीकासहितानि ।

**मूल्यं १॥ रु., मार्गव्ययः ३ आणकाः.**

अस्य ग्रन्थस्य २ परिच्छेदौ वर्तेते । संस्कृतनाटकादिग्रन्थेषु बहुषु प्राकृतस्त्र्यादिपात्राणां प्राकृतैव भाषा दृश्यते । परंतु तद्भाषायां वृत्तादिज्ञानं बहुषु जनेषु नैवोपलभ्यते । नाटकादिपरिशीलिनां च तस्यातीवावश्यकता वर्तते तस्मात् एतादृशामितरेषां च जनानामतीवोपयुज्येत प्रकृतग्रन्थः ।

---

# वाणीभूषणम् ।

## श्रीदामोदरमिश्रविरचितम् ।

**मूल्यं ६ आणकाः, मार्गव्ययः १ आणकः.**

अयं ग्रन्थो वृत्तरत्नाकरवदेव वृत्तबोधकः परं च वृत्तरत्नाकरापेक्षयाप्यस्मिन् कतिचिदधिकवृत्तानां लक्षणानि निवेशितानि, तथा प्रत्येकवृत्तस्य लक्षणमुदाहरणं चातीव रुचिरतया निवेशितं दृश्यते । तेन ग्रन्थालोचनसमये वृत्तज्ञानं मनोरञ्जनं चेत्येते युगपदेव संभवतः.

---

# वृत्तप्रत्ययकौमुदी ।

## श्रीमद्रामचरणशास्त्रिविरचिता ।

**मूल्यं १ आणकः, मार्गव्ययः अर्ध आणकः.**

---

# वृत्तचन्द्रिका ।

## श्रीरामदयालुविरचिता ।

**मूल्यं १॥ आणकः, मार्गव्ययः अर्ध आणकः.**

तुकाराम जावजी,
निर्णयसागराध्यक्षः २३, कोलभाट लेन, मुंबई.